| शिर्षक | ग्रंथकार | विषय | विस्तार (पुर्ण/अपूर्ण) | टिकाकार | आकार | पृष्ठे | लिपी | सामग्री | Lines per page | Letters per line | Condition & age (शके/विक्रम सवंत) | Additional Particulars / Remark |
|---|---|---|---|---|---|---|---|---|---|---|---|---|
| चातुर्मास्यमाहात्म्य | मधुसूदन | पुराण | पूर्ण | - | 3/8 | 176 | संस्कृत | कागद | | | | |

M-2903

श्रीगणेशायनमः ॥ ॥ श्रीवेदव्यासायनमः ॥ ॥ श्रीगुरुभ्योनमः ॥ ॥ सूतउवाच ॥ इ
त्युक्ताक्रोडरूपेणधरणीहरिणातथा ॥ पुनःपप्रच्छतंदेवंप्रणमंतीमुदामुहुः ॥ १ ॥ धरण्युवाच ॥ ॥
त्वन्मुखाच्चतथान्येभ्योनारदादिभ्यएवच ॥ श्रुत्वैवंनिश्चयंचक्रुःशिवशक्रादयोपरे॥ ॥ २ ॥ मुनयोदेवगं
धर्वायक्षराक्षसपन्नगाः ॥ नृणांत्वद्भक्तिरेकैवभवबंधविमोचनी ॥ नान्यःपंथाभवेत्क्वापिमुमुक्षूणांभवार्ण
वात् ॥ ३ ॥ त्वंसर्वदेवनिचयस्यरमास्वयंभूशर्वादिकस्यगतिदोजनकोनियंता ॥ पातातथैवशमितासि
परांतकालेशश्वत्त्वमेवनिखिलस्यचराचरस्य ॥ ४ ॥ निश्चित्यचापिसुदृढंनिखिलस्वकीयस्त्रीपुत्रदेहध
नतोपिविशेषतोयः ॥ स्नेहःसएवगदितामुनिभिर्हिभक्तिर्मुक्तिंददातिचतयापरितुष्टईशः ॥ ५ ॥ नात्रव
र्णाधिकापेक्षानाप्याश्रमवरिष्ठता ॥ शरणागतिमात्रेणगजेंद्रोहारिमापाहि ॥ ६ ॥एवंबहुविधाभूपाअंबरी
षमुखाःपुरा ॥ गतिंयातानहिपुनर्मातुःस्तन्यंपिबंतिते ॥ ७ ॥ सर्ववेदैस्त्वमेवेड्यःसर्वयज्ञैस्त्वमीज्यसे ॥
स्तूयसेसर्वदेवैश्चनोत्तमोनसदृक्तव ॥ ८ ॥ इत्येवंवेदवाचोवैश्रूयंतेमुनिभिःसदा ॥ मयापित्वन्मुखा
च्चापिसुदृढोनिश्चयःकृतः ॥ ९ ॥ तथापिभगवन्नत्यापुनःपृच्छामिचादृता ॥ कृपयावदसर्वज्ञकृपालोमा
मनुग्रहात् ॥ १० ॥ प्राप्तेकालियुगेघोरेप्रायस्त्वत्तोबहिर्मुखाः ॥ भविष्यंतिजनाःस्वामिन्केचिद्भक्ता
स्तथात्वयि ॥ ११ ॥ अल्पायुषोल्पवित्ताश्चमंदज्ञानाश्चरोगिणः ॥ स्वकीयाचारचरणेप्यक्षमानृपदस्यु
भिः ॥ १२ उपद्रुतास्तरिष्यंतिकथमेतद्वदस्वमाम् ॥ अल्पापियाकृतापूजात्वद्व्रताचरणादिकम् ॥ १३ ॥ब

हुस्यादल्पमपितंकालंचाख्याहितत्वतः ॥१४॥ श्रीवराहउवाच ॥ ॥ संसारेक्लिश्यमानानांजनानामु
ज्जिहीर्षया ॥ यत्त्वंपृष्टवतीतत्तेतत्वतःकथयाम्यहम् ॥ १५ ॥ अस्तिप्रियतमःकालश्चातुर्मास्याभिधोमम ॥
दानंव्रतंजपोहोमस्तत्रानंतगुणंस्मृतम् ॥ १६ ॥ मासेष्वन्येषुयत्किंचित्क्रियतेममतोषणम् ॥ तस्मात्कोटिगुणं
पुण्यंमाघेमकरगेरवौ ॥ १७ ॥ ततोपिकोटिगुणितंवैशाखेमासिलभ्यते ॥ ततोप्यनंतगुणितंचातुर्मास्येन
संशयः ॥ १८ ॥ अल्पायुषोल्पवित्तावामंदज्ञारोगिणोपिवा ॥ स्वकीयाचाररहिताःस्वशक्त्यायत्प्रकुर्वते ॥
१९ ॥ मुच्यंतेततएवैतेदुस्तराद्भवसागरात् ॥ धरण्युवाच ॥ केतेमासास्तुचत्वारोयेत्वत्प्रियतमाःशुभाः
॥२०॥कुतोद्वादशमासेषुत एवप्रियतांगताः ॥ तन्ममाचक्ष्वभगवन्कृपयाभक्तवत्सल ॥ २१ ॥ श्रीवराह
उवाच ॥ आषाढाद्यास्तुषण्मासादक्षिणायनमीरितम् ॥ पौषाद्यादेविषण्मासाउत्तरायणमीरितम् ॥ २२ ॥
मानुषंवर्षमेतद्धिदेवानांदिनमुच्यते ॥ सौरेणचांद्रमानेनद्विविधोमासईरितः ॥ २३ ॥ चांद्रमासोद्विधात्रो
क्तोदर्शांतःपौर्णमांतकः ॥ व्रतादौगृह्यतेतत्रपौर्णमासोहिसूरिभिः ॥ २४ ॥ तत्रसौरेणमानेनषट्कंकर्कादि
कंतुयत् ॥ प्रोक्तंयाम्यायनंषट्कंमकराद्युत्तरायणं ॥ २५ ॥ आषाढेदशमींशुक्लामारभ्यस्यात्तुकार्तिकी ॥ पौ
र्णमासीतावदिदंचातुर्मास्यव्रतादिकम् ॥ २६ ॥ पुरासर्वैर्देवगणैर्वृतोहंमेरुमस्तके ॥ निषण्णाविविधाःशृण्व
न्वेदवाणीःसुरोदिताः ॥ २७ ॥ तदायाम्यायनंप्राप्यदेवाःसर्वेप्यथोचिरे ॥ भगवन्रात्रिरस्माकंप्राप्ताहि
भवदाज्ञया ॥ २८ ॥ स्वंस्वंस्थानंप्रयास्यामइतितावदुपस्थिता ॥ शुक्लांबरधरानारीश्यामापरशु

धारिणी ॥ २९ ॥ साष्टांगंप्रणिपत्याहरात्रिस्त्वामर्थयाम्यहम् ॥ नहियाम्यायनेकश्चिद्विवाहोपनया
दिकम् ॥ ३० ॥ शुभंकर्मप्रकुरुतेततोहंगर्हिताजनैः ॥ वृथामेजीवितंस्वामिन्यज्ञनैर्गर्हितास्म्यहम् ॥
॥ ३१ ॥ यदित्वमनुगृह्णासितर्हिजीवामिनान्यथा ॥ तपएवकरिष्यामित्वत्प्रसादार्थमत्रवा ॥३२॥ इत्यु
क्त्वाप्रणताभूयस्ततोदेव।विजिज्ञपुः ॥ नाथनाथकृपासिंधोशरणागतवत्सल॥३३॥विधत्स्वकरुणांरात्रौव्रजे
द्येनकृतार्थताम्॥ततःप्रसन्नवदनस्तस्यैप्रादाद्वरोत्तमं॥ ३४॥ त्रियामेतेत्रयोयामास्तत्राद्यौद्वौमहाप्रियौ ॥स्या
तांतत्रकृतंकर्मजपदानव्रतादिकम्॥३५॥अनंतगुणमेवस्यादष्टमासकृतादपि॥आद्यःस्याच्छ्रावणोमासोनभ
स्योथद्वितियकः ३६ तृतीयश्चाश्विनोमासश्चतुर्थःकार्तिकःस्मृतः॥चातुर्मास्येपिपुण्यस्यवृद्धिःस्यात्तुदिनेदिने
३७नकार्तिकसमावृद्धिः पुण्यस्योक्तामहर्षिभिः॥इतिवाचंममश्रुत्वातुष्टाःसर्वेतदासुराः ३८रात्रिर्देवीचसंतु
ष्टाप्रणनाममुहुर्मुहुः ॥ ततःप्रभृतिलोकेस्मिन्चातुर्मास्यंममाप्रियम्॥ ३९ ॥कथितंयेप्रकुर्वंतितस्मिन्दानव्र
तादिकम् ॥ दिनेदिनेऽनंतगुणंतत्फलंप्रददाम्यहम्॥ ४० ॥ अतस्तत्रविशेषेणस्नानदानादिकंनरैः ॥ प्रकर्त
व्यंममप्रीत्यैभक्त्यासंसारभीरुभिः ॥ ४१ ॥ ॥ इतिश्रीवाराहपुराणेधरणीवराहसंवादेचातुर्मास्यमाहात्म्ये
प्रथमोऽध्यायः ॥ १ ॥ ॥ श्रीवराहउवाच ॥ ॥ ततोहंदशमींप्राप्तांविज्ञायगरुडोपरि ॥ आरु
ह्यगतवान्श्वेतद्वीपंक्षीरनिधौस्थितं ॥ १ ॥ ततोदेवाननुज्ञाप्यस्वस्वस्थानेष्वथह्यहम् ॥ शेषंसहस्रफणि
नंकुंडलीकृतविग्रहं ॥ २ ॥ एकादश्यांततःसुप्तस्तत्राहंश्रीधरान्वितः ॥ ततोहंकार्तिकेमासिशुक्लेचैका

दर्शीदिने ॥ ३ ॥ उत्थितःपूजितोदेवैर्मुकैस्तत्रनिवासिभिः ॥ रात्रिशेषेगतेपश्चात्पुनर्ब्रह्मादिदेवताः ॥ ४ ॥ तत्रागत्यनमंतिस्ममद्भक्तिनिरताःसदा ॥ तदाप्रभृत्येवमेवभवतिप्रतिवत्सरम् ॥ ५ ॥ धरण्युवाच ॥ दशम्येकादशीत्यादिनाम्नीकथंभवेत्तिथिः ॥ तत्प्रियत्वंकथंतेभूदितिविस्तरतोवद ॥ ६ ॥ श्रीवराहउवाच ॥ ॥ नहीदृशःकृतःप्रश्नःकदाचित्केनचिद्धरे ॥ कथितंनोपिकस्मैचिद्यतोगुह्यतमंत्विदं ॥ ७ ॥ यतस्त्वंमत्प्रियानित्यंतस्माद्विस्तरतोवदे ॥ शृणुष्वादिभवेदेविपरंगुह्यंमयोच्यते ॥ ८ ॥ पुराहंद्वादशादित्यान्सृष्टवानात्मनासह ॥ प्रकाशायचलोकस्यविवस्वंतंतदादिशं ॥ ९ ॥ चंद्रंकुजंबुधंजीवंशनिंशुक्रंचसप्तमम् ॥ नक्षत्रयोगताराणांसर्वेषांमंडलानिच ॥ १० ॥ सृष्ट्वासृष्ट्वायथास्थानंस्थापयित्वाततोभ्रमिं ॥ तेषामाज्ञापयांचकेशुभाशुभफलाप्तये ॥ ११ ॥ षष्टिःशतत्रयंचैवभागाःस्युर्व्योममंडले ॥ गतिस्तत्राधिकाचंद्रेततोमंदा रवेर्भवेत् ॥ १२ ॥ यदातौमिलितौस्यातांअमावास्यातदाभवेत् ॥ यदाद्वादशभागानामंतरंस्यात्तयोर्द्वयोः ॥ २३ ॥ प्रतिपन्नामसाप्रोक्तातदंतेविधुदर्शनं ॥ भागद्वादशकेनैवप्रत्यहंहितिथिर्भवेत् ॥ १४ ॥ यथायथाव्रजेद्दूराच्चंद्रमारविमंडलात् ॥ तथातथाकलाधिक्यंलभतेवर्धतेततः ॥ १५ ॥ सन्मुखौतौयदास्यातांपौर्णमासीतितिथिर्भवेत् ॥ पुनःपुनश्चांत्यंभागात्सामीप्यंभजतोद्विधोः ॥ १६ ॥ कलाक्षयोभवत्येवसर्वदैवनसंशयः ॥ यतस्तिथिर्भवत्येकाभागद्वादशकांतरात् ॥ १७ ॥ ततस्त्रिंशद्भवंतीहतिथयोव्योममंडलात् ॥ समासइतिलोकेस्मिन्गीयतेपक्षयुग्मवान् ॥ १८ ॥ वर्धमान

कलःशुक्लःक्षीयमाणकलोपरः ॥ देवाश्चपितरश्चापिपुरासर्वेममांतिकम् ॥ १९ ॥ आगत्यप्रार्थयामासुः
कालान्नोनियतान्कुरु ॥ यस्मिन्कालेयमुद्दिश्यदेवंकुर्यान्नरोर्चनं ॥ २० ॥ तदासदेवोगृण्हीयात्स्वपूजां
भक्तितःकृतां ॥ तदातद्वचनंश्रुत्वानियमंकृतवाहनम् ॥ २१ ॥ तत्रसामान्यतःशुक्लंदेवेभ्योदत्तवानहम्॥
पितृभ्यःकृष्णपक्षंचाविशेषादंतिमांतिथिम् ॥ २२ ॥ अमावास्यांतथापूर्णांदेवेभ्योपिविशेषतः ॥ दशम्ये
कादशीचैवद्वादशीचतिथित्रयम् ॥ २३ ॥ पक्षद्वयेप्यहंतत्रविशेषेणगृहीतवान् ॥ शुक्लांप्रतिपदंवह्नेर्वि
रिंच्यायद्वितीयकां ॥ २४ ॥ प्रादांतृतीयांपार्वत्यैगणेशायचतुर्थिकाम् ॥ पंचमींसर्वनागानांशेषाणांपत
येततः ॥ २५ ॥ स्कंदेंद्रयोस्तथाषष्ठींसप्तमींभास्करायच ॥ विश्वेभ्यश्चापिदेवेभ्यस्तथासोमायचाष्टमीम्
॥ २६ ॥ नवमींचमहालक्ष्म्यैवायवेवरुणायच ॥ दुर्गायैचसरस्वत्यैप्रादांतांतिथिमुत्तमाम् ॥ २७ ॥
त्रयोदशींकुबेरायगरुडायचदत्तवान् ॥ मरुद्गणायसर्वस्मैयमायचचतुर्दशीं ॥ २८ ॥ कृष्णांचतुर्दशींप्रादां
महारुद्रायवैततः ॥ तदाप्रभृतिमत्प्रीतिर्दशम्यादिदिनत्रये ॥ २९ ॥ सर्वेषांचाविशेषेणपौर्णमासींप्रदत्त
वान् ॥ सर्वदेवपितॄणांचदर्शमेकंप्रदत्तवान् ॥ ३० ॥ मत्प्रीतयेततःकुर्याद्व्रतमेतत्प्रयत्नतः ॥
योभक्तोप्यन्यदेवानांसोपिकुर्यादिदंव्रतं ॥ ३१ ॥ अन्यथासर्वदेवानांतस्मिन्कोपोनरेभवेत् ॥
यतोहंसर्वदेवानामुपास्यःसर्वदैवहि ॥ ३२ ॥ तेषुस्थित्वैवभक्तानांददामिफलमुत्तमं ॥ अ
हंहिसर्वयज्ञानांभोक्ताचप्रभुरेवच ॥ ३३ ॥ ततःकर्मफलंतस्मात्तत्तद्देवस्थितःसदा ॥ तत्तद्भक्ताय

कालेनक्षीयमाणंददाम्यहम्॥ ३४ ॥ मांभजंतितुयेसाक्षात्तत्फलंनकदाचन ॥ विनश्यतिततःकुर्यान्मत्प्रीत्यै
कर्मचाखिलम् ॥ ३५ ॥ इतितेकथितंगुह्यंनकस्मैचिन्मयेरितं ॥ अवधार्यतत सम्यक्किमन्यच्छ्रोतुमिच्छ
सि ॥ ३६ ॥ ॥ इतिश्रीवाराहपुराणेचातुर्मास्यमाहात्म्येद्वितीयोऽध्यायः ॥ २ ॥ धरण्युवाच ॥ कथमे
तद्व्रतंकार्यंदशम्यादिदिनत्रयं॥किंकार्यंकिमकार्यंवाकिंत्याज्यंग्राह्यमेववा ॥ १॥ कथंचनियमःकार्योविस्तरा
त्तद्वदस्वमाम् ॥ श्रीवराहउवाच ॥ दशमींनवमीविद्धांतद्विद्धांचापरांतिथिम् ॥२॥ वर्जयेद्यत्नतोधीमान्सु
रास्पृष्टंपयोयथा ॥ वेधोबहुविधश्चात्रगीयतेपरमार्षिभिः ॥ ३ ॥ अर्धरात्रात्परानाडीपूर्वावेकेतितद्द्वयम् ॥
निशीथंकथ्यतेतत्रवेधंकेचित्प्रचक्षते ॥ ४ ॥ नाम्नाकपालवेधोयंयदिस्याद्दशमीदिने ॥ परस्मिन्दिवसेका
र्यंदशमीव्रतमुत्तमम् ॥ ५ ॥ अरुणोदयवेधंचवेधंसूर्योदयेतथा ॥ वारप्रवृत्तिवेधंचकेचिदाहुर्मनोषिणः
॥ ६ ॥ निर्णयंतत्रतेभद्रेप्रवदामिचतंशृणु ॥ षण्नाड्यधिकपंचाशद्यदासूर्योदयाद्भवेत् ॥ ७ ॥ अरु
णोदयकालोसौततोनाडीत्रयादपि ॥ सूर्योदयइतिज्ञेयोमुनिभिःपरिभाषितः ॥ ८ ॥ यदालंकापुरिभवे
त्सूर्यमंडलदर्शनम् ॥ कालोवारप्रवृत्त्याख्योमुनिभिःपरिकीर्तितः ॥ ९ ॥ रवौदृष्टिपथंयातेयदिस्यान्नवमी
तिथिः ॥ तदास्यान्नवमीविद्धादशमीतांविवर्जयेत् ॥ १० ॥ यदितांदशमींकुर्याद्व्रतीनिष्फलतांव्रजेत् ॥
यदातुदशमीविद्धाह्येकादश्यरुणोदये ॥११ ॥ परस्मिन्दिवसेकुर्याद्दशमींवैष्णवःसदा ॥ यदिस्याद्द्वाद
शीस्पर्शस्त्रयोदश्यांतदैवहि ॥ १२ ॥ विदध्यात्पारणांनोचेत्त्रयोदश्यांतुपारणम् ॥ द्वादश्यामुपवासश्चद्वा

दश्यामेवपारणम्॥ १३ ॥ वंजुलासातिथिःप्रोक्ताहत्यायुतविनाशिनी ॥ दशमीवेधहीनाचपरतोद्वादशी
यदि ॥ १४ ॥ उपवासद्वयंकुर्यादन्यथानरकंव्रजेत् ॥ यदिविद्धामुपवसेत्हृदिशल्यंममार्पयेत् ॥ १५॥
एकादश्याःप्रांतभागोद्वादश्याःपूर्वएवच ॥ इतिपादद्वयंदेविप्रोच्यतेहरिवासरः ॥ १६ ॥ द्वादश्यांवाद
शम्यांवायदिदैवात्सआपतेत् ॥ नतदान्नंसमश्नीयादेकादश्यासमोहिसः ॥ १७ ॥ हरिवासरतःपूर्वंदश
म्यांभोजनंस्मृतम् ॥ तस्मिन्नतीतेकर्तव्याद्वादश्यांपारणाबुधैः ॥ १८ ॥ ॥ धरण्युवाच ॥ ॥ कथ
मेतद्विजानीयांसूर्याचंद्रमसोर्गतिम् ॥ यथाभवंतितिथयस्त्रिंशद्याःकथितास्त्वया ॥ १९ ॥ चक्षुषानैवसा
ज्ञातुंशक्यतेव्योमगास्थितिः ॥ अतिसूक्ष्मतमायस्माद्व्रतहानिर्भवेद्ध्रुवम् ॥ २० ॥ ज्ञानोपायमतस्तस्याय
थावद्वदमेप्रभो ॥ ॥ श्रीवराहउवाच ॥ ॥ सृष्टंपुरावेदचक्षुर्ज्योतिःशास्त्रंमयाद्भुतम्॥ २१ ॥ ततःसूर्य
श्चमुनयःस्वंस्वंसिद्धांतमूचिरे ॥ यस्मिन्देशेयदाकालेयद्यत्सिद्धांतमार्गतः ॥२२॥ उदयास्तौग्रहाणांस्युर्ग्र
हणंचंद्रसूर्ययोः ॥ विधोर्विलोकनंवापिभवेत्तत्पक्षमाश्रितः ॥ २३ ॥ इष्टकालेस्फुटौकृत्वाचंद्रसूर्यौप्रयत्न
तः ॥ तिथिमासाद्यकुर्वीतनान्यथातुकथंचन ॥ २४ प्रमादान्मत्सराल्लोभाद्भयाद्वालज्जयाथवा ॥ यो
व्रतंमेन्यथाकुर्यान्ममद्रोहीनसंशयः ॥ २५ ॥ ब्रह्महत्यादिपापानांकदाचिन्निष्कृतिर्भवेत् ॥ ममद्रोहार्जि
तंपापंनिधनंनैवगच्छति ॥ २६ ॥ योमनस्यपिमांद्रुह्येत्कर्मणावचसापिवा ॥ सद्रोहीसर्वदेवानांभवत्येव
नसंशयः ॥ २७ ॥ उषःकालेसमुत्तिष्ठेत्सर्वदावैष्णवोनरः ॥ प्रक्षाल्यपाणिपादौचततआचम्यभक्तितः

॥ २८ ॥ सुखासीनःस्मरेन्मूर्तिंमदीयामिष्टदेवतां ॥ घटीमात्रंततोध्यात्वाकुर्यान्नीराजनंमम ॥ २९ ॥
नमस्कृत्यततोगच्छेन्मलोत्सर्गभुवंनरः ॥ जलप्रवाहात्तीर्थाद्वादेवतायतनात्तथा ॥ ३० ॥ नल्वस्यार्धंत
तोप्यर्धंतस्याप्यर्धंतदर्धकम् ॥ त्यजेत्पुरीषमूत्रेचक्रमान्निष्ठीवनादिके ॥ ३१ ॥ उच्छिष्टलेपसंत्यागे
रथ्यावृक्षसमीपतः ॥ मलंनैवोत्सृजेन्मार्गेकृष्टभूमौतथाबिले ॥ ३२ ॥ वासयोग्येगृहेवापिगोष्ठेवा
चत्वरेपिवा ॥ श्मशानेयज्ञभूमौवामलमूत्रंचनोत्सृजेत् ॥ ३३ ॥ व्याघ्रदस्युभयेरण्येवृक्षगुल्मेभयं
करे ॥ अशक्तःसन्प्रवाहादिसमीपेमलमुत्सृजेत् ॥ ३४ ॥ आतुरोजरठोवापिनतदादोष
भाग्भवेत् ॥ दक्षिणेश्रवणेकृत्वाब्रह्मसूत्रंचपृष्ठतः ॥ ३५ ॥ विनिक्षिप्यतृणैर्भूमिमाच्छाद्यमलमुत्सृजेत्
॥ विदारयेत्तदातत्तुकृम्यनुत्पत्तिहेतवे ॥ ३६ ॥ हस्तत्रयेस्थितंपश्चादादायांभःकमंडलुम् ॥ लोष्ठशौचं
विधायादौजलशौचंसमाचरेत् ॥ ३७ ॥ ततोमृदंसमादायशुद्धभूमिसमुद्भवाम् ॥ सकृर्ल्लिंगेप्रदद्यात्ता
मार्द्रामलकमात्रतः ॥ ३८ ॥ पंचकृत्वस्तथाऽपानेलिस्वासांडंचधावयेत् ॥ ततःस्थानांतरंगत्वावामे
दद्यान्मृदोदश ॥ ३९ ॥ उभयोःसप्तकृत्वःस्यात्पंचपंचचपादयोः ॥ मैथुनेप्येवमेवस्यान्मूत्रेस्यान्मेहृ
नेसकृत् ॥४०॥ त्रिर्वामेद्विर्द्वयोर्द्विर्द्विःपादयोर्मृत्तिकास्मृता ॥ महाराण्यामेतदर्धंतदर्धंपथिचस्मृतम् ॥४॥
आतुरेनियमोनास्तिमहापादितथैवच ॥ एतत्स्याद्गृहिणःशौचंद्विगुणंब्रह्मचारिणः ॥ ४२ ॥ वनस्थानांय
तीनांचत्रिगुणंचचतुर्गुणं ॥ सत्कर्मानुष्ठितौशौचमेवंकार्यंप्रयत्नतः ॥ ४३ ॥ गंधलेपक्षयोयावत्तावच्छौ

चंप्रकीर्तितम् ॥ एवंस्त्रीणांचशूद्राणामनुलोमविलोमिनां ॥ ४४ ॥ व्रतादौद्विगुणंकार्यंसर्वैःपुण्याभिवृद्धये ॥ शौचहीनेनयत्कर्मशुभमप्यशुभंभवेत् ॥ ४५ ॥ पुण्यकर्मभवेत्पापंतस्माच्छौचंसमाचरेत् ॥ दंतशुद्धिततःकुर्याच्छुद्धकाष्टेनयत्नतः ॥ ४६ ॥ कार्पासींतुवरींत्रेणुंतिंतिणींचविवर्जयेत् ॥ कषायकटुतिक्तेनविनानंदांचतुर्दशीं ॥ ४७ ॥ उपोषणाहेश्राद्धाहेअमावास्यांचसंक्रमे ॥ निषिद्धेदिवसेकुर्याद्दंडुषान्द्वादशैवतु ॥ ४८ ॥ तृणपर्णैःसदाकुर्यादमामेकादशींविना ॥ सकर्णंतुमुखंप्रोक्तंकराबाकूर्परौस्मृतौ ४९ आजानुक्षालयेत्पादौगुदंसांडंतुधावयेत् ॥ आचम्यचततोगच्छेत्तीर्थस्नानायतत्रच ॥ ५० ॥ स्वशास्त्रोक्तविधानेनस्नानंसंध्यांचतर्पणम् ॥ विधायागत्यजुहुयादग्निहोत्राहुतीर्द्विजः ॥ ५१ ॥ जपस्वाध्यायदेवार्चामहायज्ञांश्चपंचच ॥ विधायविधिवत्प्राज्ञोभुंजीतविधिनाततः ॥ ५२ ॥ सायंसंध्यामुपास्याथपूजयित्वापुनर्हरिं । यामादूर्ध्वंशयीताथपुनरुत्थायचोषसि ॥ ५४ ॥ एवंदिनेदिनेकुर्वन्विष्णुलोकेनहीयते ॥ ५४ ॥ इतिश्रीवाराहपुराणेचातुर्मास्यमाहात्म्येधर०दशौचाचारवर्णनंनामतृतीयोऽध्यायः ॥ ३ ॥

श्रीवराहउवाच ॥ आद्यस्तुश्रावणोमासःश्रीधरस्तस्यदेवता ॥ हृषीकेशोभाद्रपदेपद्मनाभस्तथाश्विने ॥ १ ॥ दामोदरःकार्तिकेस्याद्देवतापापनाशिनो ॥ शाकंनभक्षयेदाद्येद्वितीयेदधिवर्जयेत् ॥ तृतीयेक्षीरसंत्यागः कार्तिकेद्विदलंत्यजेत् ॥ शिलायांभिद्यमानस्यद्वेदलेभवतोयदि ॥ ३ ॥ तदेवद्विदलंधान्यंबहुबीजंफलंत्यजेत् ॥ एतानियदिभुंजीतचातुर्मास्येनराधमः ॥ ४ ॥ नाहंगृह्णामितत्पूजांकिल्बिषीसभवेद्यतः ॥

पितरोनैवगृह्णंतितद्दत्तंहविरुत्तमम् ॥ ५ ॥ दशम्यांप्रातरुत्थायनित्यकर्मविधायच ॥ प्रार्थयेदच्युतंधीमान्
व्रताचरणतत्परः ॥ ६ ॥ दशमीदिवसेप्राप्तेव्रतस्थोहंजनार्दन ॥ त्रिदिनंदेवदेवेशनिर्विघ्नंकुरुतेनमः
॥ ७ ॥ उष्णोदकंचतांबूलंतैलंमैथुनमेवच ॥ दिवास्वापःकांस्यभोज्यंद्यूतंव्यायामएवच ॥ ८ ॥ क्रीडां
शरीरसंस्कारंश्मश्रुकर्मचमर्दनम् ॥ पाषंडालापवारस्त्रीनिटनाटचविलोकनं ॥ ९ ॥ मांसंपरान्नंमाषान्नं
हिंसाद्विर्भोजनंतथा ॥ वर्जनीयानियत्नेनदशम्यादिदिनत्रये ॥ १० ॥ उपवासद्वयंचेत्स्यात्तदैवंप्रार्थयेद्ध
रिम् ॥ दशम्यामेकभक्तोहमुपवासद्वयंहरे ॥ ११ ॥ कृत्वातुरीयेद्वादश्यांविधास्यामितुपारणम् ॥ चतुर्दिन
व्रतादस्मान्मत्कृतात्परमेश्वर ॥ १२ ॥ भूत्वाप्रसन्नहृदयोभक्तिंमेवर्धयानिशं ॥ प्रार्थयित्वाततोयामद्व
यादूर्ध्वंचरेद्भुजिं ॥ १३ ॥ लवणस्यपरित्यागोदशमीद्वादशोदिने ॥ यदिकुर्वीतचैकान्नंव्रतस्यद्विगुणंफ
लं ॥ १४ ॥ एकादश्यांततोभ्यर्च्यप्रार्थयेन्मधुसूदनम् ॥ एकादश्यांनिराहारःस्थित्वाहमपरेहनि ॥ १५ ॥
भोक्ष्यामिपुंडरीकाक्षशरणंमेभवाच्युत ॥ उपवासद्वयेप्राप्तेप्रार्थयेद्देवमच्युतं ॥ १६ ॥ अद्यश्वश्चनिरा
हारोभूत्वाहंद्वादशीदिने ॥ विधास्येपारणंदेवप्रीतोभवममानिशं ॥ १७ ॥ ततोरात्रौप्रवृत्तायामाषाढेशु
क्लपक्षके ॥ एकादश्यांमहापूजांविदध्याद्भक्तिपूर्वकम् ॥ १८ ॥ नीराजनंगीतवाद्यंकृत्वामांप्रार्थ
येत्पुनः ॥ सुप्तोभवजगन्नाथक्षीराब्धौशेषमंचके ॥ १९ ॥ चातुर्मास्यंभवेद्यावद्भक्तानांप्रीतिमावह ॥
त्वत्प्रीतयेकरोम्येवचातुर्मास्यव्रतंक्रमात् ॥ २० ॥ तत्तन्मासेयदुक्तंस्यात्तेनतुष्टोभवाच्युत ॥ तत्रादौमा

सिशाकानिवर्जयामिचसर्वशः ॥ २१ ॥ प्रीतोभवतुतेनायंश्रीधरःश्रीधरान्वितः ॥ प्रार्थयित्वाततःकु
र्यात्स्वापितंपरमेश्वरम् ॥ २२ ॥ विप्रानामंत्रयेत्पश्चाद्दिशत्यभ्यधिकंशतं ॥ तदर्धंवातदर्धंवायथाशक्तिनि
मंत्रयेत् ॥ २३ ॥ नैवाहारंप्रकुर्वीतनाद्भिःकृत्वोजलंपिबेत् ॥ नश्राद्धंतत्रकुर्वीतनहोमंनचतर्पणं ॥ २४ ॥
यदिमोहात्प्रकुर्वीतव्रतहानिर्भवेद्ध्रुवं ॥ ममद्रोहीभवेच्चापिनरकंपितृभिर्व्रजेत् ॥ २५ ॥ एकादश्यांत्र
योदश्यांयच्छ्राद्धंप्रतिवत्सरं ॥ द्वादश्यांवैष्णवैःकार्यमन्यैरेवमृतेहनि ॥ २६ ॥ सूतकादौयथाश्राद्धंसू
तकांतेविधीयते ॥ तथैवैकादशीश्राद्धंविदध्याद्द्वादशीदिने ॥ २७ ॥ प्रेतदाहेतुसंप्राप्तेजुहुयाद्वैघृताहुतिं
॥ नचरुंश्रपयेत्तत्रप्रेतपिंडंचसक्तुभिः ॥ २८ ॥ विदधीतद्वितीयेह्नितततःश्राद्धंसमाचरेत् ॥ वैष्णवाना
मयंधर्मःसंततःपरिकीर्तितः॥ २९ ॥ शुक्लायांचाथकृष्णायांसर्वमासेषुसर्वदा ॥ एकादश्यामयंधर्मोनाधर्मः
कर्हिचिद्भवेत् ॥ ३० ॥ धर्मोभवत्यधर्मोपियोहिभक्त्याकृतोमम ॥ पापंभवतिधर्मोपिमद्भक्तिविरुग
द्धियः ॥ ३१ ॥ धरण्युवाच ॥ कथंवैष्णवतांयातिमर्त्योयंवदतद्विभो ॥ कथंचावैष्णवत्वंस्याद्येनद्रो
होभवेत्तव ॥ ३२ ॥ ॥ श्रीवराहउवाच ॥ ॥ पृष्टवान्नारदःपूर्वमेवमेवाथतंप्रति ॥ यदुक्तवांस्त
दाचक्षेशृणुष्वावहिताभव ॥ ३३ ॥ ममवीर्याण्यनंतानिरजसःपार्थिवादपि ॥ नहिब्रह्मापितन्नानंनरमा
वेत्तिसर्वशः ॥ ३४ ॥ मत्समश्चोत्तमोनास्तिनासीद्वानभविष्यति ॥ सर्वेब्रह्मादयोदेवामदाज्ञावशवर्ति
नः ॥ ३५ ॥ मदाज्ञयैवकुर्वंतिसृष्टिस्थितिलयादिकं ॥ मदाज्ञयाविनाकोपितृणाहरणशक्तिमान् ॥ ३६ ॥

एकएवकरोम्यस्यविश्वस्यजननंस्थितिं ॥ प्रलयंनियमंज्ञानमावृत्तिंबंधमोक्षकौ ॥ ३७ ॥ अतोहंभग
वान्नाम्नासर्ववेदैःस्तुतःसदा ॥ स्रष्टाहंसर्वदेवानांब्रह्मादीनांतथाश्रियः ॥३८॥ नियंतास्मिततोवेदैःस्तूयेहं
पुरुषोत्तमः ॥ वेदानांसोपनिषदामयमेवार्थनिश्चयः ॥ ३९ ॥ इतिनिश्चितबुद्धिर्यःस्वदेहात्स्वसुतादपि
॥ स्वस्त्रियःस्वधनादेश्चयस्यस्नेहोभवेन्मम ॥ ४० ॥ पंचरात्रोक्तमार्गेणयश्चदीक्षामवाप्नुयात् ॥ ममा
युधधरोनित्यंमामुद्दिश्यैवकर्मकृत् ॥ ४१ ॥ मत्प्रीतिरेवपरमंफलमित्येवनिश्चितः ॥ तारयिष्यतिसंसारा
द्दुस्तराद्धरिरेवमां ॥ ४२ ॥ नह्यन्यत्साधनंमुक्तौसर्ववेदेषुगीयते ॥ इतिनिश्चित्यमामेवचिंतयन्शरणंग
तः ॥ ४३ ॥ मत्कथाश्रवणेसक्तोमद्भक्तैःसंगवान्सदा ॥ भक्तिमान्ममभक्तेषुस्वधर्मनिरतःसदा ॥ ४४ ॥
पक्षेपक्षेमासिमासित्रिदिनव्रतकारकः ॥ ममव्रतानिचान्यानिमत्प्रीत्याधिक्यसिद्धये ॥ ४५ ॥ सर्वदा
यःकरोत्येवचातुर्मास्येविशेषतः ॥ अकर्ताचनिषिद्धानामागमोक्तविकर्मणां ॥ ४६ ॥ न्यायागतधन
स्तत्त्वज्ञाननिष्ठोऽतिथिप्रियः ॥ श्राद्धकृत्सत्यवादीचगृहस्थोप्यथवायतिः ॥ ४७ ॥ ब्रह्मचारीवनस्थोवा
ब्राह्मणःक्षत्रियोपिवा ॥ वैश्यःशूद्रोनुलोमोवाविलोमोवाथमानवः ॥४८॥ वैष्णवःप्रोच्यतेदेवितद्विरुद्धोह्यवै
ष्णवः॥ सर्वधर्मोज्झितोयःस्यान्मयिभक्तिंकरोतियः ॥ ४९॥ सोपियात्यविलंबेनविमुक्तिंनात्रसंशयः ॥ म
न्मुद्रांकितदेहोयोमन्मंत्राणांचजापकः ॥ ५० ॥ शालग्रामशिलापूजानिरतःसर्वदातुयः ॥ मन्निवेदित
भोक्ताचसदामन्नामजापकः ॥५१॥ भोजनादौभोजनांतेतुलसींभक्षयेत्तुयः ॥ तथैवतीर्थग्रहणंनित्यंयःकु

स्तेपुमान् ॥ ५२ ॥ पद्माक्षतुलसीमालांधारयेत्पुण्यकर्मकृत् ॥ यमोपितंनशक्नोतिक्रोधदृष्ट्याभिवीक्षितुं
॥ ५३ ॥ यःकरोतिचमन्निंदांप्रोत्यातांचशृणोतियः ॥ मन्मुद्रांकितदेहंचद्वेष्टिमद्व्रतभंजकः॥५४॥मदुत्तमो
मत्समोवादेवोन्योस्तीतिवक्तिच॥अहमेवस्वतंत्रोस्मितथाहंपरमेश्वरः॥५५॥मदधोनामिदंसर्वमितिजानाति
योधमः ॥ नहिवेदाःप्रमाणानिस्वर्गोमोक्षोथवास्तिन ॥ ५६ ॥ किंतुस्याद्ब्राह्मणैस्तुष्टैरुष्टैर्वाकिंभवेन्मम॥
यथेष्टाचाररनिरतोनातिथिंपूजयेच्चयः ॥५७॥ ब्रह्मस्वहरणेसक्तोब्राह्मणानामतोषकः ॥ इत्याद्यगुणवान्प्रो
क्तोनारकीवैष्णवेतरः ॥५८॥ वैष्णवस्यकुलंधन्यंयःपूर्वानपिमोचयेत् ॥ अवैष्णवस्यधिग्जन्मयःपूर्वान
विपातयेत् ॥५९॥ वैष्णवोवैष्णवान्लोकान्यातिस्वपितृभिःसह ॥ अवैष्णवःस्वपितृभिस्तमोंधंयाति
शाश्वतं ॥६०॥ नतस्यपुनरावृत्तिःकल्पकोटिशतैरपि ॥ इतितेकथितंदेविमयोक्तंनारदाययत् ॥ पुरैव
निश्चितंविद्धिकिमन्यच्छ्रोतुमिच्छसि ॥ ६१ ॥ इतिश्रीवाराहपुराणेचातुर्मास्यमहात्म्येध • वरा॰चतु
र्थोध्यायः ॥४ ॥ धरण्युवाच ॥ मुद्राणांधारणंदेवकथंकार्यंवदस्वतत् ॥ येनस्याद्वैष्णवोमर्त्योयत्त्यागा
त्स्यादवैष्णवः ॥१॥ ॥ श्रीवराहउवाच ॥ ॥ मुद्राणांधारणंदेविद्विविधंपरिकीर्तितं ॥ तापयित्वामृदाचै
वब्राह्मणस्यविशेषतः ॥२ ॥आषाढेकार्तिकेमासिमौंजिबंधविधौतथा ॥ द्वादशेहनिजातस्यनामकर्मदि
नेथवा ॥३॥ महागुरुसमाजेचधारयेत्तप्तमुद्रिकाः ॥ विधिनाग्निंप्रतिष्ठाप्यसहस्रव्याहृतीर्हुनेत् ॥४॥
ॐ ह्रां ह्रीं हुंनमश्चक्रायस्वाहेत्यष्टोत्तरंशतं ॥ शंशंखायनमःस्वाहेत्यपिचाष्टोत्तरंशतं ॥ ५॥ घृतेनजुहुया

देषचक्रहोमइतीरितः ॥ ततश्चास्विष्टकृद्धोमंविधायगुरुस्ततः ॥ ६ ॥ तदभावेपितुर्वापिकस्माच्चिन्महतो
पिवा ॥ धारयेत्तप्तचक्रंचदक्षिणेबाहुमूलके ॥ ७ ॥ स्तनेचजठरेचैवततःशंखंतुसव्यतः ॥ भुजमूलेस्तने
चैवधारयेत्पंचमुद्रिकाः ॥ ८ ॥ चक्रशंखौद्वयोर्वाह्वोरथवाधारयेद्बुधः ॥ स्त्रियोबालाश्चसंस्कार्यास्ततःकर्मा
णिकारयेत् ॥ ९ ॥ यथाश्मशानगंकाष्ठंगर्हितंसर्वकर्मसु ॥ अतप्तशंखचक्रांगंतथागार्हितमुच्यते ॥ १० ॥
नारीवापुरुषोवापिब्राह्मणःक्षत्रियोपिवा ॥ वेदवेदांगवेत्तापिसर्वकर्मसुगार्हितः ॥ ११ ॥ यदिचक्रंभुजेनस्या
त्तप्तशंखोपियस्यहि ॥ प्रायश्चित्तेनचीर्णेनयथोक्तविधिनापिवा ॥ १२ ॥ निष्कृतिर्नैवपापस्ययावच्चक्रंनधा
रयेत् ॥ तस्मात्स्वशुद्धिकामेनमत्प्रीतेरपिवांछया ॥ १३ ॥ मदीयत्वज्ञापनायधारयेत्तप्तचक्रकं ॥ ममच
क्रांकितंदृष्ट्वायुक्तंपापैरनेकशः ॥ १४ ॥ यमदूतानस्पृशंतितप्तांगारमिवापरं ॥ ममचक्रांकिततनुर्म्रियतेय
त्रकुत्रचित् ॥ १५ ॥ प्रयागेयागतिःप्रोक्तासागतिस्तस्यदेहिनः ॥ महापापयुतोवापिमृतोभुक्त्वाल्पकालतः
॥ १६ ॥ फलंपापस्ययात्येवममलोकंसनातनं ॥ मृदावैधारणंकुर्यात्प्रत्यहंस्नानतःपरं ॥ १७ ॥ सर्वायुधानिचांगे
षुतिलकानांतथोपरि ॥ विधिंतस्यप्रवक्ष्यामिशृणुष्वात्रहिताधरे ॥ १८ ॥ आचम्यप्राणानायम्याति
लकायुधधारणं ॥ करिष्येइतिसंकल्प्यवामहस्तेजलंक्षिपेत् ॥ १९ ॥ गायत्र्यावाथमूलेनमंत्रयि
त्वाप्रयत्नतः ॥ गृह्णीयाद्द्वारकांमृत्स्नामथवापुण्यतीर्थजां ॥ २० ॥ मृत्तिकेधारयिष्यामिभक्त्या
त्वांकेशवप्रिये ॥ त्वयास्पृष्टोगमिष्यामिविष्णुलोकंसनातनं ॥ २१ ॥ इतितांप्रार्थयित्वाथमंत्र

पूतजलेक्षिपेत् ॥ स्योनापृथिवीतिमंत्रेणगायत्र्यावासमाहितः ॥ २२ ॥ ततस्तुमूलमंत्रेणमर्दिता
तांमृदंपुनः ॥ गायत्रीमूलमंत्राभ्यांदशकृत्वास्त्रिरेववा ॥ २३ ॥ मंत्रयित्वाततोभक्त्यातिलकान्धा
रयेत्सुधीः ॥ द्विषट्चतुर्द्व्येकसंख्यान्विप्राद्याबिभृयुःक्रमात् ॥ २४ ॥ ललाटमध्योदरहृद्गलेषु
पार्श्वेभुजेकर्णमूलेचदक्षे ॥ तद्वद्वामेपृष्ठमध्येचमूर्ध्निशुक्लेन्यसेत्केशवादीनितेषु ॥ २५ ॥ संकर्ष
णादीन्यथकृष्णपक्षेनामानिविष्णोर्ब्राह्मणोद्वादशैव ॥ ललाटहृद्बाहुषुक्षत्रजातोवैश्योललाटेहृदयेथशूद्रः
॥ २६ ॥ ललाटएवैकमथात्रनामान्युक्तक्रमेणैवसदवाविन्यसेत् ॥ नारायणायुधादीनांमुद्राःसंप्रा
र्थयेत्ततः ॥ २७ ॥ सुदर्शनमहाज्वालकोटिसूर्यसमप्रभ ॥ अज्ञानांधस्यमेनित्यंविष्णोर्मार्गप्रद
र्शय ॥ २८ ॥ पांचजन्यनिजध्वानध्वस्तपातकसंचय ॥ पाहिमांपापिनंघोरसंसारार्णवपातिनं
॥ २९ ॥ संसारभयभीतानांयोगिनामभयप्रद ॥ पद्महस्तस्थितंविष्णोःपाहिमांसर्वतोभयात् ॥
॥ ३० ॥ दैत्यशोणितदिग्धांगकौमोदाकिगदेहरेः ॥ भिंधिभिंधितमोंतस्थंत्वांनमामिपुनःपुनः ॥ ३१ ॥
नाममुद्रेनमस्तुभ्यंत्वदंकिततनुर्हरेः ॥ प्रसादाद्विष्णुलोकेहंचिरंस्थास्यामिनिर्वृतः ॥ ३२ ॥
नमोनंदकदैत्यानांशिरश्छेत्रभयप्रद ॥ सज्जनानांततश्छिंधिममाज्ञानंहृदिस्थितम् ॥ ३३ ॥ चर्म
रक्षसदापापाद्धरिपूजांतरायतः ॥ विघ्नान्नमामिसततंभक्तियुक्तोहरिप्रिय ॥ ३४ ॥ दैत्यायुद्ध
निभिन्नास्ताःपततेभिन्नवक्षसः ॥ तस्मैशार्ङ्गनमस्तुभ्यंविष्णुभक्तिविवर्धय ॥ ३५ ॥ वायुरूपहरेर्बा

णवायोरधिकवेगवान् ॥ नयमांवायुवेगेनविष्णुलोकंसनातनं ॥ ३६ ॥ इत्यायुधानिसंप्राथ्यंगृ
हीत्वामुद्रिकास्ततः ॥ धारयेत्तिलकेश्वेतान्विष्णुसायुज्यसिद्धये ॥ ३७ एकंकपोलेहृदयेत्रीणिम
ध्योदरेतथा ॥ पंचपार्श्वेद्वयंत्रीणिदक्षिणस्तनमंडले ॥ ३८ ॥ चक्रद्वयंदक्षिणेतुबाहौतिलक
मूर्धनि ॥ न्यसेदधस्तादेकंतुतिलकेवामबाहुजे ॥ ३९ ॥ कर्णमूलेतथाकंठेएकमेकंतुधारयेत् ॥
वामेकपोलेशंखंतुद्वयंपार्श्वेत्रयंस्तने ॥ ४० ॥ शंखद्वयंतथाबाहौविन्यसेत्पुंड्रमूर्धनि ॥ बाहौ
चतिलकाधस्ताद्दक्षिणेशंखमेककं ॥ ४१ ॥ कर्णमूलेतथावामेशंखमेकंतुविन्यसेत् ॥ ललाटे
तुगदाधार्यावामेपार्श्वेतथास्तने ॥ ४२ ॥ तिलकेवामबाहौद्वेशंखाधस्ताद्गदेलिखेत् ॥ पद्मभा
गद्वयंवक्षस्यधःपार्श्वेतथास्तने ॥ ४३ ॥ एकैकंदक्षिणेबाहौचक्राधस्ताद्वयंलिखेत् ॥ नामसर्व
षुपुंड्रेषुस्तनयोश्चकपोलयोः ॥ ४४ ॥ शरंचापंतथामूर्ध्निस्तनयोःखड्गचर्मणि ॥ कौस्तुभंहृदयेद
ध्याच्छ्रीवत्संदक्षिणेस्तने ॥ ४५ ॥ ब्राह्मणोधारयेदेवंक्षत्रियादिस्तथैवच ॥ अभावेतिलकस्यापि
तत्रतत्रतथान्यसेत् ॥ ४६ ॥ स्त्रीभिस्तुशूद्रवद्धार्यामंत्रैर्नामात्मकैस्तथा ॥ प्रक्षाल्यायुधतोयेनशिरोमूले
नमार्जयेत् ॥ ४७ ॥ नमोमुद्राभ्यइत्युक्त्वास्थापयेन्मानिताःसदा ॥ नाधस्तात्प्रक्षिपेत्ता
स्तुकेवलंभुविनाक्षिपेत् ॥ ४८ ॥ सौवर्णीराजतीवापियत्किंचिद्धातुजापिवा ॥ काष्ठपाषाणजा
वापिनावमन्येतकर्हिचित् ॥ ४९ ॥ वैष्णवैःकार्यमेवंहिशैवादीनांचमेशृणु ॥ होमजांभूतिमादा

पूतजलेक्षिपेत् ॥ स्योनापृथिवीतिमंत्रेणगायत्र्यावासमाहितः ॥ २२ ॥ ततस्तुमूलमंत्रेणमर्दितां तांमृदंपुनः ॥ गायत्रीमूलमंत्राभ्यांदशकृत्वास्त्रिरेववा ॥ २३ ॥ मंत्रयित्वाततोभक्त्यातिलकान्धा रयेत्सुधीः ॥ द्विषट्चतुर्द्वयैकसंख्यान्विप्राद्याबिभृयुःक्रमात् ॥ २४ ॥ ललाटमध्योदरहृद्गलेषु पार्श्वेभुजेकर्णमूलेचदक्षे ॥ तद्वद्वामेपृष्ठमध्येचमूर्ध्निशुक्लेन्यसेत्केशवादीनितेषु ॥ २५ ॥ संकर्ष णादीन्यथकृष्णपक्षेनामानिविष्णोर्ब्राह्मणोद्वादशैव ॥ ललाटहृद्बाहुषुक्षत्रजातोवैश्योललाटहृदयेथशूद्रः ॥ २६ ॥ ललाटएवैकमथात्रनामान्युक्तक्रमेणैवसदैवविन्यसेत् ॥ नारायणायुधादीनांमुद्राःसंप्रा र्थयेत्ततः ॥ २७ ॥ सुदर्शनमहाज्वालकोटिसूर्यसमप्रभ ॥ अज्ञानांधस्यमेनित्यंविष्णोर्मार्गंप्रद र्शय ॥ २८ ॥ पांचजन्यनिजध्वानध्वस्तपातकसंचय ॥ पाहिमांपापिनंघोरंसंसारार्णवपातिनं ॥ २९ ॥ संसारभयभीतानांयोगिनामभयप्रद ॥ पद्महस्तस्थितंविष्णोःपाहिमांसर्वतोभयात् ॥ ॥ ३० ॥ दैत्यशोणितदिग्धांगकौमोदकिगदेहरेः ॥ भिंधिभिंधितमोंतस्थंत्वांनमामिपुनःपुनः ॥ ३१ ॥ नाममुद्रेमस्तुभ्यंत्वदंकिततनुर्हरेः ॥ प्रसादाद्विष्णुलोकेहंचिरंस्थास्यामिनिर्वृतः ॥ ३२ ॥ नमोनंदकदैत्यानांशिरश्छेत्रभयप्रद ॥ सज्जनानांततश्छिंधिममाज्ञानंहृदिस्थितम् ॥ ३३ ॥ चर्म रक्षसदापापाद्धरिपूजांतरायतः ॥ विघ्नान्नमामिसततंभक्तियुक्तोहरिप्रिय ॥ ३४ ॥ दैत्याघद्ध निभिन्नास्ताःपतंतेभिन्नवक्षसः ॥ तस्मैशार्ङ्गनमस्तुभ्यंविष्णुभक्तिविवर्धय ॥ ३५ ॥ वायुरूपहरेर्बा

णवायोरधिकवेगवान् ॥ नयमांवायुवेगेनविष्णुलोकंसनातनं ॥ ३६ ॥ इत्यायुधानिसंप्रार्थ्यगृ
हीत्वामुद्रिकास्ततः ॥ धारयेत्तिलकेष्वेतान्विष्णुसायुज्यसिद्धये ॥ ३७ एकंकपोलेहृदयेत्रीणिम
ध्योदरेतथा ॥ पंचपार्श्वेद्वयंत्रीणिदक्षिणस्तनमंडले ॥ ३८ ॥ चक्रद्वयंदक्षिणेतुबाहौतिलक
मूर्धनि ॥ न्यसेदधस्तादेकंतुतिलकेवामबाहुजे ॥ ३९ ॥ कर्णमूलेतथाकंठेएकमेकंतुधारयेत् ॥
वामेकपोलेशंखंतुद्वयंपार्श्वेत्रयंस्तने ॥ ४० ॥ शंखद्वयंतथाबाहौविन्यसेत्पुंड्रमूर्धनि ॥ बाहौ
चतिलकाधस्ताद्दक्षिणेशंखमेककं ॥ ४१ ॥ कर्णमूलेतथावामेशंखमेकंतुविन्यसेत् ॥ ललाटे
तुगदाधार्यावामेपार्श्वेतथास्तने ॥ ४२ ॥ तिलकेवामबाहौद्वेशंखाधस्ताद्गदेलिखेत् ॥ पद्मभा
गद्वयंवक्षस्यधःपार्श्वेतथास्तने ॥ ४३ ॥ एकैकंदक्षिणेबाहौचक्राधस्ताद्द्वयंलिखेत् ॥ नामसर्व
षुपुंड्रेषुस्तनयोश्चकपोलयोः ॥ ४४ ॥ शरंचापंतथामूर्ध्निस्तनयोःखड्गचर्मणि ॥ कौस्तुभंहृदयेद
ध्याच्छ्रीवत्संदक्षिणेस्तने ॥ ४५ ॥ ब्राह्मणोधारयेदेवंक्षत्रियादिस्तथैवच ॥ अभावेतिलकस्यापि
तत्रतत्रतथान्यसेत् ॥ ४६ ॥ स्त्रीभिस्तुशूद्रवद्धार्यामंत्रैर्नामात्मकैस्तथा ॥ प्रक्षाल्यायुधतोयेनशिरोमूले
नमार्जयेत् ॥ ४७ ॥ नमोमुद्राभ्यइत्युक्त्वास्थापयेन्मानिताःसदा ॥ नाधस्तात्प्रक्षिपेत्ता
स्तुकेवलंभुविनाक्षिपेत् ॥ ४८ ॥ सौवर्णीराजतीवापियत्किंचिद्धातुजापिवा ॥ काष्ठपाषाणजा
वापिनावमन्येतकर्हिचित् ॥ ४९ ॥ वैष्णवैःकार्यमेवंहिशैवादीनांचमेशृणु ॥ होमजांभूतिमादा

यसद्योजातादिमंत्रकैः ॥ ५० ॥ मानस्तोकेतिमंत्रेणतत्तद्वर्णोक्तसंख्यया ॥ तर्जन्यनामिकामध्यां
गुलिभिस्तिलकान्धरेत् ॥ ५१ ॥ शैवैःशाक्तैश्चतिर्यंचोगाणेशैश्चंदनेनतु ॥ तिर्यंचएवकर्तव्यास्तत्त
न्मुद्रांकिताःसदा ॥ ५२ ॥ सौरावैष्णववत्कुर्युर्दंडाकारंललाटके ॥ पद्माकारंवक्षसिस्याद्वेणुपत्रा
कृतीपरौ ॥ ५३ ॥ प्रदीपकलिकाभावान्चतुःपंचांगुलीमितान् ॥ एवंविधान्सपुंड्रांश्चपश्चात्सं
ध्यांसमाचरेत् ॥ ५४ ॥ श्राद्धंसंध्याजपोहोमःस्वाध्यायःपितृतर्पणं ॥ व्यर्थंभवतितत्सर्वमूर्ध्व
पुंड्रंविनाकृतम् ॥ ५५ ॥ स्त्रियोवापुरुषावापिविनापुंड्रंकदाचन ॥ नकुर्युःसुकृतंकर्मक्रियमाणंवृथा
भवेत् ॥ ५६ ॥ सुवासिन्योपिबिभृयुस्तिलकोपरिकुंकुमम् ॥ पश्चात्कुर्युःशुभंकर्मगृहकार्याणि
यानिच ॥ ५७ ॥ अनामिकाशांतिकरीमध्यमायुःकरीभवेत् ॥ अंगुष्ठ पुष्टिदःप्रोक्तस्तर्जनीमोक्षदा
यिनी ॥ ५८ ॥ तत्तदंगुलिनाकुर्यात्तत्तत्कामोर्ध्वपुंड्रकं ॥ इतितेकथितंदेविमुद्रातिलकधारणं ॥ ५९ ॥
एवंस्याद्वैष्णवोन्योवातत्तत्कर्मानुसारतः ॥ फलंप्राप्नोतिमर्त्योत्रशुभंवाप्यथवाशुभ ॥ ६० ॥ इतिश्रीवा
राहपुराणेचातुर्मास्यमाहात्म्येमुद्रातिलकमहिमावर्णनंनामपंचमोऽध्यायः ॥ ५ ॥ ॥ धरण्युवाच ॥
स्नानंकतिविधंदेवकर्तव्यंस्वस्यशुद्धये ॥ कथंकिन्नुविधातव्यंकृपयातद्वदस्वमे ॥ १ ॥ श्रीवराहउवाच ॥
मंत्रस्नानंमलस्नानंध्यानस्नानंचवारुणम् ॥ पंचमंचजलस्नानमितिपंचविधंस्मृतं ॥ २ ॥ नवद्वारमिदंदे
हंस्रवत्यहरहर्मलं ॥ तच्छुद्ध्यर्थंप्रकर्तव्यंमलस्नानंदिनेदिने ॥ ३ ॥ प्रथमंत्रिर्निमज्ज्याप्सुकराभ्यांशो

धयेत्ततः ॥ सर्वाण्यंगानित्रिःपश्चान्निमज्ज्याचम्यभक्तितः ॥ ४ ॥ मलस्नानमिदंप्रोक्तमावश्यकमिदंनृणां
॥ अनुद्धृतजलाभावेउद्धृताभिःसमाचरेत् ॥ ५ ॥ अथशीतजलाशक्तोकुर्यादेवोष्णवारिणा ॥ अस्याप्य
शक्तौकर्तव्यंमंत्रस्नानंदिनेदिने ॥ ६ ॥ संध्योपासनकर्मादावधिकारस्यसिद्धये ॥ आर्द्रवस्त्रेणसंमार्ज्य
सर्वगात्रभवंमलम् ॥ ७ ॥ आचम्यजलमादायपात्रेवामेकरेथवा ॥ गायत्र्यावाथमूलेनत्रिवारमभिमं
त्रयेत् ॥ ८ ॥ तज्जलंप्रोक्षयेद्गात्रेदर्भैर्वातुलसीदलैः ॥ तर्जनीमध्यमाभ्यांवाप्यृचेनाब्दैवतेनवै ॥ भूमौशिर
सिचाकाशेआकाशेभुविमस्तके ॥ मस्तकेचतथाकाशेभूमौचनवधाक्षिपेत् ॥ १० ॥ अब्दैवतःस्मृतोमंत्रआ
पोहिष्ठेतिवैत्र्यृचः ॥ त्रिरावृत्त्याक्षिपेत्तोयंप्रत्यृचंनवधाद्विजः ॥ ११ ॥ आकाशंहृदयंप्रोक्तंभूमिःपादा
वितिस्मृतं ॥ ततआचम्यविधिवत्कुर्यात्संध्यादिकर्मच ॥ १२ ॥ यदाप्यत्रनशक्नोतिवृद्धोवाप्यथवातुरः
॥ शयानोपिप्रकुर्वीतध्यानस्नानंतुनित्यशः ॥ १३ ॥ उद्यदादित्यसंकाशंपीतनिर्मलवाससं ॥ कौस्तु
भोद्भासितोरस्कंरक्तांभोजपदद्वयं ॥ १४ ॥ रत्नानुविद्धरशनंत्रिवलीललितोदरं ॥ व्यूढोरस्कंबृहत्स्कंधं
कंबुग्रीवंचतुर्भुजं ॥ १५ ॥ शंखचक्रगदापद्मधारिणंतरुणंसदा ॥ शीतांशुकोटिवदनंबिंबोष्ठंसुस्मितान
नं ॥ १६ ॥ सुनासिकंसुकर्णंचमकराकृतिकुंडलं ॥ अष्टमीचंद्रललितंललाटंसुकपोलकं ॥ १७ ॥
विकचेंदीवराक्षंचनीलकुंचितमूर्धजम् ॥ द्युमत्किरीटकटकनूपुरांगदमुद्रितं ॥ १८ ॥ श्रीवत्सवक्षसंध्या
येन्मनसासुस्थिरेणच ॥ यांकांचिदथवाध्यायेन्मन्मूर्तिंस्वेष्टदेवतां ॥ १९ ॥ मस्तकोपरितांध्यात्वात

त्पादाभ्यांविनिःसृता ॥ ब्रह्मणापाल्यमानायागंगात्रिपथगामिनी ॥२० ॥ धृताशिवेनशिरसाततोपिनिः
सृताबहिः ॥ निपतंतीस्वकेमूर्ध्निप्लावयंतीमुहुर्मुहुः ॥ २१ ॥ सर्वांगानिततःसम्यगाचम्यशुचितामियात् ॥
स्नातोपिविधिवच्छक्त्यावारुणेनजलेनवा ॥ २२ ॥ मंत्रस्नानंतथाकुर्याद्ध्यानस्नानंचनित्यशः ॥ अधि
कास्यभवेत्सिद्धिःस्नानद्वयसमुद्भवा ॥ २३ ॥ जलस्नानमथोवक्ष्येसिद्ध्यर्थंसर्वकर्मणां ॥ कूपेवाप्यांत
डागेवामानुषेदेवखातके ॥ २४ ॥ प्रवाहेपुण्यनद्यांचयातुनस्यात्समुद्रगा ॥ क्रमाद्दशगुणंपुण्यमेषुस्नाना
न्नसंशयः ॥ २५ ॥ नद्यांसमुद्रगामिन्यांततःशतगुणंस्मृतं ॥ कावेरीनर्मदाकृष्णातापीभीमरथीतथा ॥२६॥
यमुनाकौशिकीसिंधुर्गंगावैतरणीमही ॥ चर्मण्वतीचफल्गुश्चनदीपुण्यापुनःपुनः ॥ २७ ॥ गंडकीतम
साशोणाप्रणीतावंजरातथा ॥ ब्रह्मपुत्रश्चसिंधुश्चपयोष्णीप्रवरातथा ॥ २८ ॥ एताःपुण्यतमाःप्रोक्ताःस्ना
नदानतपःसुच ॥ एताभ्योप्यधिकाकृष्णासंनिधौगौतमीनदी ॥ २९ ॥ ततःपुण्यतराप्रोक्तागौतमीपापना
शिनी ॥ ततःपुण्यतमागंगाजान्हवीसुरपूजिता ॥ ३० ॥ पुष्करंचकुरुक्षेत्रंविराजंचशिवालयं ॥ अन्या
न्यपिचतीर्थानिदेवखातानिवैभुवि ॥ ३१ ॥ स्थानेस्थानेतुबहुशःस्वामिपुष्करिणीयथा ॥ तेषुचापिमह
त्पुण्यंस्नानदानजपादिभिः ॥ ३२ ॥ शुचिःक्षालितपाणिःसन्धौतपादोद्विराचमेत् ॥ ततोबद्धशिखाभू
त्वादेशकालंचसंस्मरेत् ॥ ३३ ॥ त्रिर्निमज्ज्यमलस्नानंविधायाथाभिमंत्रयेत् ॥ गायत्र्यावाथमूलेनयाः
प्रवतइतीरयन् ॥३४॥ प्रार्थयित्वाततःकुर्यादिमंमेगंगइत्यृचा ॥मंत्रयित्वानवर्चेनमंत्रेणाब्दैवतेनवै ॥३५॥

पादशोर्धर्चशश्चैवऋक्शोवापिजलंक्षिपेत् ॥ हस्ताभ्यांमूर्धतःकुर्यादवनर्षणमार्जनं ॥ ३६ ॥ ऋतंचे
तित्र्यृचेनाप्सुजापित्वोन्मज्ज्यवैपुनः ॥ त्रिर्मज्जनमथोकृत्वाजलेम ूर्तिमर्चयेत् ॥ ३७ ॥ ध्यात्वाजल
स्थांमन्मूर्तिंमूलमंत्रेणभक्तितः ॥ जलेनैवतुकुर्वीतषोडशाप्युपचारकान् ॥ ३८ ॥ तत्पादसलिलंमूर्ध्निधृत्वा
त्रिश्चपिबेत्पुनः ॥ ततआचम्यकुर्वीततर्पणंजलसंस्थितः ॥ ३९ ॥ ब्रह्मादिदेवान्भूर्देवान्भुवर्देवान्स्वः स्थि
तान् ॥ भूर्भुवःस्वस्थितान्देवान्तर्पयेत्तद्वदप्यथ ॥४०॥ ऋषीन्द्वैपायनादींश्चभूर्भुवःस्वःस्थितांस्तथा ॥
संतर्पयेच्चाग्निकव्यवाहनादीन्पितॄंस्तथा ॥ ४१ ॥ येकेचास्मत्कुलेजाताअपुत्रागोत्रिगोमृताः ॥ तेगृह्ण
तुमयादत्तंवस्त्रनिष्पीडनोदकं ॥ ४२ ॥ इतिमंत्रेणवस्त्रांभोदद्यान्निष्पीडयचांबुनि ॥ ततस्तीरंसमासा
द्ययक्ष्माणंतर्पयेद्द्विजः ॥ ४३ ॥ यन्मयादूषितंतोयंशारीरमलसंभवात् ॥ तत्पापशोधनार्थाययक्ष्माणंतर्प
याम्यहं ॥ ४४ ॥ इतिमंत्रेणसंमंत्र्यतीरेक्षिप्त्वाजलांजलिं ॥ शालग्रामशिलातोयंततोमूर्धनिधारयेत् ॥
॥ ४५ ॥ त्रिःपिबेच्चद्विजःपश्चादिमान्मंत्रानुदीरयेत् ॥ त्रिरात्रफलदानद्योयाःकाश्चिदसमुद्रगाः ॥ ४६ ॥
समुद्रगास्तुपक्षस्यमासस्यसरितांपतिः ॥ षण्मासफलदागोदावत्सरस्यतुजान्हवी ॥ ४७ ॥ विष्णुपा
दोदकस्यैताःकलांनार्हंतिषोडशीं ॥ गंगाप्रयागगयपुष्करनैमिषाणिसंसेवितानिबहुशःकुरुजांगलानि ॥
कालेनतीर्थसलिलानिपुनंतिपापंपादोदकंभगवतःप्रपुनातिसद्यः ॥ ४८ ॥ ततोद्विवाससीशुक्लेशुद्धेचप
रिधारयेत् ॥ पादौप्रक्षाल्यकुर्वीततिलकायुधधारणं ॥ ४९ ॥ जलस्नानमिदंकार्यंसर्वथैवद्विजातिभिः ॥

उद्धृतेनांबुनावापिकुर्यादेवंतुनान्यथा ॥ ५० ॥ तत्राशक्तःप्रकुर्वीतस्नानमुष्णेनवारिणा ॥ नास्त्युद्धृतज लस्नानेदेवर्षिपितृतर्पणं ॥ ५१ ॥ अघमर्षणमंत्रास्तुपठन्नंबुविनिक्षिपेत् ॥ स्वमूर्धनिततःकुर्यान्नित्यंक र्मविधानतः ॥ ५२ ॥ शीतास्वप्सुनिषिच्योष्णंवारिपश्चात्तुशतिलं ॥ तुलसीमृत्तिकायुक्तंगायत्र्याचाभि मंत्रितं ॥ ५३ ॥ जलंविधायकुर्वीतयोह्यशक्तोभवेद्द्विजः ॥ अस्नात्वायस्तुभुंजीतमलभुक्सनिगद्यते ॥ ॥ ५४ ॥ इतिश्रीवाराहपुराणेचातुर्मास्यमाहात्म्येषष्ठोऽध्यायः ॥ ६ ॥ ॥ श्रीवराहउवाच ॥ ॥ अथातःसंप्रवक्ष्यामिवारुणंस्नानमुत्तमं ॥ कृतेनयेनमुच्यंतेनराःपातकराशितः ॥ १ ॥ धौतांघ्रिपाणिराच म्यशुद्धवासोद्वयान्वितः ॥ स्मृत्वामांचततोगच्छेत्तीर्थेदेहविशुद्धये ॥ २ ॥ यत्रान्वातंडुलान्त्रापितिला न्दूर्वाःकुशानपि ॥ जलपात्रंतथादायगोमयंभस्महोमजं ॥ ३ ॥ बलिस्थापर्वतानामित्येकर्चाप्रार्थये द्भुवं ॥ मावोरिषदित्येकर्चाखनित्वादायमृत्तिकां ॥ ४ ॥ स्योनापृथिवीतिमंत्रेणततोगच्छेन्नदीतटं ॥ नाभिमात्रजलेगत्वासचैलंस्नानमाचरेत् ॥ ५ ॥ ततस्तीरंसमासाद्यदेशंकालंचकीर्तयेत् ॥ गाय त्र्यामृदमभ्युक्ष्यमंत्रैरेभिस्तुमंत्रयेत् ॥ ६ ॥ त्रातारमिंद्रमवितारंयमायमधुमुत्तमं ॥ तत्त्वायामिवयंसोमे त्यादिभिर्विधिवत्ततः ॥ ७ ॥ मंत्रेणानेनविभजेत्तत्सूर्यरोदसीतिच ॥ एकंभागंक्षिपेत्तीर्थेदशदीक्षुद्वितीं यकं ॥ ८ ॥ तृतीयभागमादायइदंविष्णुर्विचक्रमे ॥ गायत्र्याचाभिमंत्र्याथमंत्रानेतानुदीरयेत् ॥ ९ ॥ अश्वक्रांतेरथक्रांतेविष्णुक्रांतेवसुंधरे ॥ शिरसाधारयिष्यामिरक्षस्वमांपदेपदे ॥ १० ॥ उद्धृतासिवराहेण

कृष्णेनशतबाहुना ॥ मृत्तिकेब्रह्मदत्तासिकाश्यपेनाभिमंत्रिता ॥ ११ ॥ मृत्तिकेहरमेपापंयन्मयादुष्कृ
तंकृतं ॥ त्वयाहतेनपापेनगच्छामिपरमांगतिं ॥ १२ ॥ कुशोदकंपलार्धंचगायत्र्याचाभिमंत्रयेत् ॥ विधाय
मेलकंतेनसर्वगात्राणिलेपयेत् ॥ १३ ॥ पौरुषेणाथसूक्तेनइदंविष्णुर्विचक्रमे ॥ मंत्रैरोभिस्तुसर्वांगेष्वनु
लिंपेत्ततोमृदं ॥ १४ ॥ आदौमूर्ध्निमृदंलिंपेत्क्रमेणांतेचपादयोः ॥ अक्षीभ्यामित्यादिमंत्रैःप्रत्यंगा
निचलेपयेत् ॥ १५ ॥ अंगादंगेतिमंत्रेणसर्वांगेलेपयेत्ततः ॥ हरिसंस्मरणंकृत्वाविप्रानुज्ञामवाप्यच ॥ १६ ॥
त्रिर्निमज्ज्यजलेगत्वासर्वांगानिविशोधयेत् ॥ त्रिर्निमज्ज्यतथाचम्यपुनर्गच्छेत्तटंप्रति ॥ १७ ॥ करिष्ये
गोमयस्नानमितिसंकल्प्यभक्तितः ॥ अग्रमग्रंचरंतीनामोषधीनांवनेवने ॥ १८ ॥ तासामृषभपत्नीनांप
वित्रंकायशोधनं ॥ तन्मेरोगांश्चशोकांश्चपापंमेहरगोमय ॥ १९ ॥ लक्ष्मीगृहनमस्तुभ्यंसर्वसंपद्विवर्ध
न ॥ लक्ष्मीनिवासभूतायगोमयायनमोनमः ॥ २० ॥ तवस्पर्शेनपापानिनश्यंतीत्याहवैहरिः ॥ इति
तत्प्रार्थनांकृत्वागायत्र्याचाभिमंत्रयेत् ॥ २१ ॥ गोमायुरदादित्येकचांसर्वांगंलेपयेत्ततः ॥ स्नात्वातटं
समागच्छेद्भस्मचादायवैपुनः ॥ २२ ॥ भस्मस्नानमहंकुर्वेइतिसंकल्पयेत्ततः ॥ शुष्कगोमयदाहोत्थ
मुच्छिष्टंपावकस्यच ॥ सर्वपापविनिर्मुक्तोभस्मस्नानंकरोम्यहं ॥ २३ ॥ आग्नेयंभस्मनास्नानमवगाह्यंचवा
रुणं ॥ आपोहिष्ठेतिचब्राह्मवायव्यंगोरजस्मृतं ॥ २४ ॥ गायत्र्यावाथमूलेनसर्वत्रैवाभिमंत्रगम् ॥ मानस्तो
केतिमंत्रेणसर्वांगंलेपयेत्ततः ॥ २५ ॥ कृत्वानुपूर्वंवत्स्नानंतटंगच्छेद्द्विराचमेत् ॥ पंचगव्यैस्ततःस्नायात्प्राय

श्चित्तादिकर्मसु ॥ २६ ॥ गोमूत्रंगोमयंक्षीरंदध्याज्यंचकुशोदकं ॥ पंचगव्यमिदंप्रोक्तंस्नानेवाप्राशनेपि
वा२७ ॥ पलंदधिपलंक्षीरंमूत्रंसर्पिःपलार्धकं ॥ अंगुष्टपर्वमात्रंतुगोमयंपरिकीर्तितं ॥ २८ ॥ कुशोदकं
पलार्धंचगायत्र्याचाभिमंत्रितं ॥ विधायमेलनंतेनसर्वगात्राणिलेपयेत् ॥२९॥ पुनःस्नात्वातटंगच्छेच्छुद्ध
स्नानंसमाचरेत् ॥ श्रीविष्णोश्चैवतीर्थानांमाहिमावाचकान्मनून् ॥ ३०॥ वेदोक्तांश्चपुराणोक्तान्पठन्स्ना
नंसमाचरेत् ॥ ब्राह्मणानुमतेनैवतत्रादौविधिमाचरेत् ॥ ३१ ॥ तंडुलाधान्यराजस्त्वंवारुणोमधुसंयु
तः ॥ निर्णजकोसिपापानांपवित्रऋषिभिःस्मृतः ॥ ३२ ॥ तिलोसिसोमदैवत्योगोसवेदेवनिर्मितः ॥
तर्पकःसर्वदेवानांपितृणामपिसर्वदा ॥ ३३ ॥ स्नानाच्चभक्षणाद्दानाद्धोमाच्चापिहुताशने ॥ पापानां
नाशकस्तस्मात्त्वांनत्वामूर्ध्निधारये ॥ ३४ ॥ धारयेदितिमंत्राभ्यांतंडुलानथवायवान् ॥ तिलांश्चापि
ततोदूर्वांआयनेताितिमंत्रतः ॥ ३५ ॥ आदायप्रार्थयेत्तांतुमंत्रेणानेनभक्तितः ॥ दूर्वेगोरोमजातासिस्प
र्शनात्पावनेशुभे ॥३६ ॥ शिरसाधारयामित्वांपापनाशंकुरुष्वमे ॥ इतिदूर्वांविनिक्षिप्यततःस्नायाद्यथा
विधि ॥ ३७ ॥ जलमध्येततोगत्वाप्रार्थयेद्वरुणंप्रभुं ॥ सुदेवोसीतिमंत्रेणयच्चिद्धितेतिमंत्रतः ॥ ३८ ॥
त्वंराजासर्वतीर्थानांत्वमेवजगतःपिता ॥ याचितंतीर्थंमेदेहिसर्वपापापनुत्तये ॥ ३९ ॥ अंगुष्ठाग्रेणकु
र्वीतमंडलाकृतिनाततः ॥ आह्वानंसर्वतीर्थानांयाःप्रवतइत्यृचा ॥ ४० ॥ इमंमेइतिमंत्रेणत्रिवेण्या
वाहनंतथा॥ तीर्थंप्रकल्पयेत्तत्रमूलंमत्रमिमंपठन् ॥४१ ॥ नमोनारायणायेतिमूलंसत्रणवंस्मृतं ॥ अष्टा

क्षरमिदंचापिमंत्रराजइतीरितः ॥ ४२ ॥ दशकृत्वःपठन्नेवंमंत्रयेत्सलिलंतथा ॥ नंदिनीनलिनीसीता मालतीचमलापहा ॥ ४३ ॥ विष्णुपादाब्जसंभूतागंगात्रिपथगामिनी ॥ भागीरथीभोगवतीजाह्नवी त्रिदशेश्वरी ॥ ४४ ॥ द्वादशैतानिनामानियत्रयत्रजलाशये ॥ स्नानाद्युक्तःपठेन्नित्यंतत्रतत्रवसाम्यहं ॥ ॥ ४५ ॥ योसौसर्वगतोविष्णुश्चित्स्वरूपीनिरंजनः ॥ सएवद्रवरूपेणगंगांभोनात्रसंशयः ॥ ४६ ॥ योजनानांसहस्रेणगंगांयःस्मरतेनरः ॥ अपिदुष्कृतकर्मासौलभतेपरमांगातिं ॥ ४७ ॥ गंगागंगेति योब्रूयाद्योजनानांशतैरपि ॥ मुच्यतेसर्वपापेभ्योविष्णुलोकंसगच्छति ॥ ४८ ॥ इतिगंगांप्रार्थयित्वा आपोवाइतिमंत्रतः ॥ अभिमंत्र्यपुनस्तीर्थंततोमांप्रार्थयेद्बुधः ॥ ४९ ॥ समस्तजगदाधारशंखचक्र गदाधर ॥ देवदेहिममानुज्ञांयुष्मत्तीर्थनिषेवणे ॥ ५० ॥ यस्यपादोद्भवांगंगांत्रैलोक्येशोमहेश्वरः ॥ दधारशिरसाभक्त्यातंनमामिहरिंपरं ॥ ५१ ॥ संजातायस्यदेवस्यपादप्रक्षालनोदकं ॥ त्रैलोक्यपा वनीगंगामाधवंतंनमाम्यहं ॥ ५२ ॥ नमःकमलनाभायनमस्तेजलशायिने ॥ नमस्तेस्तुहृषीकेशगृहा णार्घ्यंनमोस्तुते ॥ ५३ ॥ इतिदत्वामत्यमर्घ्यंततोमांप्रार्थयेद्बुधः ॥ तीर्थकोटिसहस्राणिव्रतकोटिशतानि च ॥ ५४ ॥ नारायणप्रणामस्यकलांनार्हंतिषोडशीं ॥ तत्तत्तीर्थस्यमाहात्म्यंततःसंकीर्तयेद्बुधः ॥ ५५ ॥ निमज्ज्यत्रिस्तथाचम्यमंत्रस्नानंसमाचरेत् ॥ समुद्रज्येष्ठाइत्यादिचतुर्भिरभिषेचयेत् ॥ ५६ ॥ इमं मेगंगइत्येकचैतोन्विंद्रंन्यृचेनच ॥ तरत्समंदीत्याद्यैश्चचतुर्भिरपिमंत्रकैः ॥ ५७ ॥ आपइद्वाइति

द्वाभ्यांयाःप्रवतइत्यपि ॥ आपोहिष्ठानवर्चेनमार्जयेद्गात्रमात्मनः ॥ ५८ ॥ जलेनिमज्ज्यकुर्वीत ऋतंचेत्यघमर्षणं ॥ आचम्यतिलकान्कृत्वाजलेनैवजलेस्थितः ॥ ५९ ॥ पापक्षयार्थगायत्र्याजपे दष्टोत्तरंशतं ॥ षट्त्रिंशदष्टाविंशतिर्वाजपित्वापूजयेच्चमां ॥ ६० ॥ जलस्थितंजलप्रायैरुपचारैश्च भक्तितः ॥ तत्तीर्थंशिरसाधृत्वात्रिःपिबेच्चततःपुनः ॥ ६१ ॥ आचम्यतर्पयेद्देवान्‌ऋषींश्चाथपितॄनपि॥ देवान्‌यज्ञोपवीतीस्यादुपवीतीऋषीन्‌यजेत् ॥ ६२ ॥ प्राचीनावीतितःकुर्यात्पितॄणांतर्पणंबुधः ॥ विधायविधिवत्सर्वंयक्ष्मणस्तर्पणादिकं ॥ ६३ ॥ शालग्रामशिलातोयंधारयेच्छिरसाततः ॥ त्रिःपीत्वा थाद्विराचम्यशुक्लवस्त्रद्वयंदधत् ॥ ६४ ॥ नित्यकर्माणिकुर्वीतनार्द्रवासाःकथंचन ॥ नान्यत्रग्रहणात्कुर्याज्जलेतिष्ठन्जपादिकं ॥ ६५ ॥ वेदमंत्रविहीनंतुस्त्रीशूद्राणांविधीयते ॥ मंत्रैःपौराणिकैरेववारुणंस्नानमुत्तमं ॥ ६६ ॥ अन्याश्चापिक्रियास्तेषांवेदमंत्रविवर्जिताः ॥ कारयेत्सततंनैवमूलमंत्रंप्रयोजयेत् ॥ ६७ प्रणवंचापिनोयुंज्याद्युंजन्नरकमाप्नुयात् ॥ नकुर्यादशुचौदेशेजपंस्नानादिकर्मच ॥ ६८ ॥ नद्दीपेदुर्जनानांचसन्निधौवाकथंचन ॥ तिष्ठेयुर्यत्रवैद्वीपेत्रिंशद्वावोत्यनावृताः ॥ ६९॥ तस्मिन्‌द्वीपेपिकुर्वीतपुण्यकर्माणिसर्वशः ॥ स्वल्पेतुपुण्यहानिःस्यादापत्तौनैवदोषभाक्॥७०॥ इतितेवारुणंस्नानंविस्तरात्परिकीर्तितं ॥ चातुर्मास्येथवामाघेवैशाखेचापिनित्यशः ॥ ७१ ॥ मासंकरोतियःस्नानंप्रातर्वारुणसंज्ञक ॥ नतस्यदुष्कृतंकिंचिच्छरीरेस्थातुमर्हति ॥ ७२ ॥ ब्रह्महत्यादिपापानियांतिसद्यःक्षयंवरे ॥ नत

स्यगर्भवासोस्तिमल्लोकेमोदतेचिरं ॥७३॥ ब्रह्मयज्ञंप्रकुर्वात्प्रत्यहंतिलतर्पणं ॥ पितॄनुद्दिश्यपित्रादीन्नानि
षिद्धदिवसंविना ॥ ७४ ॥ भानुवारेभौमवारेनंदाभृगुमघासुच ॥ त्रयोदश्यांतुसप्तम्यांभरण्यांकृत्तिका
सुच ॥ ७५ ॥ अयनद्वितयेचैवचतुर्ष्वपियुगादिषु ॥ गृहेमृताहेजन्मर्क्षेसंध्ययोश्चतथानिशि ॥ ७६ ॥
पिंडदानंमृदास्नानंनकुर्यात्तिलतर्पणं ॥ निषिद्धदिवसेवारेनक्षत्रेचतथातिथौ ॥ ७७ ॥ यस्तिलैस्तर्पणं
कुर्यात्तज्जलंरुधिरंभवेत् ॥ तीर्थेतिथिविशेषेचप्रेतकार्येतथैवच ॥ ७८ ॥ प्रेतपक्षेव्यतीपातेसंक्रांतौवै
धृतावपि ॥ निषिद्धेपिदिनेकुर्यात्तिलयुक्तंतुतर्पणं ॥ ७९ ॥ अमृतंतुभवेत्प्रातर्मध्याह्नेक्षीरवद्भवेत् ॥
अपराह्णेभवेत्तोयंसायाह्नेरुधिरंभवेत् ॥ ८० श्राद्धांगतर्पणंह्यंतेमध्याह्नेनित्यतर्पणं ॥ संकोचेतीर्थाला
भेवाप्रातरप्याचरेत्तुतत् ॥ ८१ ॥ दिवोदितानिकर्माणिप्रमादादकृतानिचेत् ॥ शर्वर्याःप्रथमेयामेदिवाव
त्कर्मकारयेत् ॥ ८२ ॥ ब्रह्मयज्ञंचसौरंचवर्जयेत्तिलतर्पणं ॥ तिष्ठन्नपिशयानोवाब्रह्मयज्ञंसमाचरेत् ॥
८३ ॥ तस्यतुद्वावनध्यायौदेशोवात्मायदाऽशुचिः ॥ अशक्तोपिप्रकुर्वीतब्रह्मयज्ञंचनित्यदा ॥ ८४ ॥
इमंतुवैश्वदेवात्प्राक्ऊर्ध्वंवापिसमाचरेत् ॥ निष्पीडयतियोमूढःस्नानवस्त्रमतर्पितं ॥ ८५ ॥ निराशाः
पितरस्तस्यशप्त्वागच्छंतिनान्यथा ॥ द्विजातीनांगृहस्थानांद्विवारंस्नानमुच्यते ॥ ८६ ॥ वनस्थानांय
तीनांचत्रिवारंतुप्रकीर्तितं ॥ त्रिवारमपिकुर्वीतनैष्ठिकब्रह्मचार्यपि ॥ ८७ ॥ अन्योद्विवारंकुर्वीतत्रिवारम
पिचेच्छया ॥ प्रातरेकंचमध्याह्नेद्वितीयंपरिकीर्तितं ॥ ८८ ॥ दिवसंपंचधाकृत्वाप्रातःकालोथसंगवः॥

मध्यापराह्णसायाह्नाःक्रमशःपरिकीर्तिताः ॥ ८९ ॥ प्रातःसंध्यामुपासीतयावत्प्रातर्नलंघितं ॥ प्रायश्चि
त्तंतदूर्ध्वंस्याच्चतुर्थार्घ्यंचपंचमं ॥ ९० ॥ प्राणायामत्रयंप्रातर्द्विगुणंसंगवेस्मृतं ॥ मध्याह्नेत्रिगुणंप्रोक्तम
पराह्णेतुषड्गुणं ॥ ९१ ॥ सायाह्नेद्वादशगुणंसूर्यहत्यांततोव्रजेतत् ॥ सायंसंध्यामतिक्रांतौप्रायश्चि
त्तंतथानिशि ॥ ९२ ॥ कालातिक्रमणेस्वल्पेत्रिसाध्यमपिकर्हिचित् ॥ चतुर्थार्घ्यंप्रकुर्वीताशिरोव्याहृति
संपुटं ॥ ९३ ॥ राष्ट्रक्षोभेनृपक्षोभेरोगार्तेचमहापदि ॥ संध्यावंदनाविच्छित्ति सूतकेपि
नदोषकृत् ॥ ९४ ॥ मत्कथाश्रवणेसक्तोमत्कथापठनेतथा ॥ ममध्यानरतोयस्तु
कथंचित्कर्मलोपवान् ॥ ९५ ॥ नदोषस्तस्यतत्रास्तिप्रायश्चित्तंनतस्यच ॥ मत्कर्मकुर्वतांपुंसांकर्मलोपो
भवेद्यदि ॥ ९६ ॥ तेषांकर्माणिकुर्वंतितिस्रःकोटचोमहर्षयः ॥ वृथाकर्मरतोयस्तुनित्यकर्मविलोपकः
॥ ९७ ॥ प्रायश्चित्तंतुद्विगुणंतस्यपुंसःप्रकीर्तितं ॥ कर्मलोपोभवेद्यस्यअत्यावश्यककर्मणः ॥ ९८॥ यथो
क्तंतस्यनिर्दिष्टेप्रायश्चित्तंमहर्षिभिः ॥ मत्कथाश्रवणादौतुसक्तःकर्मविलोपनं ॥ ९९ ॥ ज्ञात्वाविदध्या
त्तस्योक्तंप्रायश्चित्तंतुनामभिः ॥ अज्ञानात्कर्मलोपःस्यान्मत्कथामग्नचेतसः ॥ १०० ॥ ध्यायतोपिनत
स्यास्तिप्रायश्चित्तंकदाचन ॥ यतस्तेषांप्रकुर्वीतकर्माणिमुनयोखिलाः ॥ अतस्तेषांनदोषोस्तिमहापुण्य
वतांधरे ॥ १०१ ॥ ॥ इतिश्रीवा०पु०चा०मा०सप्तमोध्यायः ॥७॥ ॥ धरण्युवाच ॥ ॥ क
थंजप.प्रकर्तव्यस्त्वत्प्रीतिर्जायतेयतः ॥ केतेमंत्रवराःस्वामिन्वदस्वकृपयामम ॥ १ ॥ ॥ श्रीवराह

उवाच ॥ सर्वमंत्रेषुगायत्रीवरिष्ठाप्रोच्यतेबुधैः ॥ ततोविप्रवराःप्रोक्ताअष्टौमंत्रामयाधरे ॥ २ ॥ प्रणवोमा
तृकाष्टार्णोव्याहृतिर्द्वादशाक्षरः ॥ गायत्रीपौरुषंविष्णुर्महामंत्राःप्रकीर्तिताः ॥ ३ ॥ प्रणवोयतिनाचैव
गृहीभिर्जप्यतेनसः ॥ सर्वकर्माणितेनैवकुर्वंतियतयःसदा ॥ ४ ॥ मातृकावर्णसंघातोमूलमंत्रोष्टवर्णकः
महाव्याहृतयश्चैवचतस्रोवेदमूर्तयः ॥ ५ ॥ प्रणवोथमनःशब्दश्चतुर्थीभूषितोपरः ॥भगवान्वासुदेवाख्यो
द्वादशाक्षरईरितः ॥ ६ ॥ महाव्याहृतिभिर्हीनाचतुर्विंशतिवर्णका ॥ गायत्रीसैवसावित्रीप्रोच्यतेविबुधै
रिह ॥ ७ ॥ पौरुषंसूक्तमेवस्यात्पौरुषोमंत्रराडयं ॥ विष्णुस्तुविष्णुमंत्रःस्याच्चतुर्थीभूषितोहिसः ॥ ८ ॥
नमःशब्दस्ततःप्रोक्तःषड्वर्णस्तस्यभेदतः ॥ संध्यांगायास्तुगायत्र्यास्त्रिगुणोमूलमंत्रकः ॥ ९ ॥ जप्तव्यःस
र्वथान्येतुयथेष्टंजपयोगिनः ॥ कुर्याच्चमानसींपूजांमूलमंत्रंजपेद्द्विजः ॥ १० ॥ कूर्मासनोपविष्टःस्या
त्स्वस्तिकासनसंस्थितः ॥ शुद्धभूमौस्थितःस्वस्थचेताःकुर्याज्जपंनरः ॥ ११ ॥ अन्येपिबहवोमंत्राःपं
चरात्रेमयोदिताः ॥ तेपिजप्यायथाशक्त्यागुरुणैवोपदेशिताः ॥ १२ ॥ विनागुरुंस्वबुद्ध्यायोमंत्रंप्राप्तौ
जपेदिह ॥ नफलंतस्यलभतेममद्रोहीभवेन्नरः ॥ १३ ॥ गुरुंविनातुयोदीक्षांस्वबुद्ध्यालभतेनरः ॥
नतत्सिद्धिमवाप्नोतिनरकंचाभिपद्यते ॥ १४ ॥ तप्तमुद्रांचयोमर्त्यःस्वबुद्ध्यैवगुरुंविना ॥ तेनःहंतापि
तोदेविनकरेवसातिर्ध्रुवं ॥ १५ ॥ अनुसृत्यगुरुंतस्मान्मद्भक्तंसंगवर्जितं ॥ मोक्षकामस्तुगृह्णीयाद्दीक्षामं
त्रांश्चवैष्णवान् ॥ १६ ॥ हृदयंसर्ववेदानांरहस्यंपरमंमया ॥ पंचरात्रनिगदितंयतस्तंत्रोक्तमार्गतः ॥

॥ १७ ॥ दीक्षांप्राप्यैवमंत्रांश्चन्यासध्यानादिकंतथा ॥ अवगम्यततःसम्यक्जपंकुर्याद्विमुक्तये ॥१८
गुरुंमंत्रोपदेष्टारंयोद्विष्यान्मनसापिहि ॥ ममद्वेषीसविज्ञेयोनात्रकार्याविचारणा ॥ १९ ॥ गुरुंविद्याप्र
दंयस्तुद्विष्यान्मत्सरतःक्वचित् ॥ अरण्येनिर्जलेसस्यात्सुचिरंब्रह्मराक्षसः ॥ २० ॥ ॥ धरण्युवाच ॥
महाव्याहृतिभिर्हीनागायत्र्यभ्यधिकाकथं ॥ सव्याहृतेस्तुगायत्र्याःसंशयंमेपराकुरु ॥ २१ ॥ श्रीवरा
हउवाच ॥ मंत्रेभ्योन्येभ्यएवासौयथैवप्रणवोवरः ॥ केवलोपितथैवेयंगायत्रीकेवलावरा ॥ २२ ॥
इतिसंक्षेपतःप्रोक्तंयत्पृष्टंमेत्वयानघे ॥ रहस्यंपरमंदेविकिमन्यच्छ्रोतुमिच्छसि ॥ २३ ॥ इतिश्रीवाराह
पुराणेचातुर्मास्यमाहात्म्येअष्टमोऽध्यायः॥८॥ धरण्युवाच ॥ यदास्याद्द्वादशीस्वल्पानित्यकर्मकथंतदा ॥
होमश्चवैश्वदेवश्चकदाकार्योवदस्वतत् ॥ १ ॥ श्रीवराहउवाच ॥ त्रयोभागास्त्रियामायास्तत्राद्यौसंत्यजे
द्बुधः ॥ भागेतृतीयेस्नात्वातुनित्यकर्माणिकारयेत् ॥ २ ॥ आमध्याह्नानिकर्माणिरात्रावेवविधायच ॥
स्वल्पायामपिभद्रायांपारणंरविदर्शने ॥ ३ ॥ यदासूर्योदयात्पूर्वंघटिकैकावशिष्यते ॥ सवैसूर्योदयोना
ममुनिभिःपरिकीर्तितः ॥ ४ ॥ तत्पूर्वंघटिकैकातुप्रातःकालइतीरितः ॥ मध्याह्निकंतदाकुर्याद्धोमंसूर्यो
दयेतथा ॥५॥ वैश्वदेवंततःकृत्वाब्रह्मयज्ञंचतर्पणम् ॥ आपोशनंकरेकृत्वाप्रतीक्षेद्रविदर्शनम् ॥६॥ अरु
णोदयतःपूर्वंकृतंस्नानंवृथाभवेत् ॥ यतःपर्युषितंतत्स्यात्साधनद्वादशींविना ॥ ७ ॥ साधनीयातियत्ने
नयतःसासाधनीततः ॥ स्वल्पायांयदिद्वादश्यांपारणांविदधातियः॥८॥व्रतंपूर्णंभवेत्तस्यव्रतलोपोऽन्यथा

भवेत् ॥ द्वादशद्वादशीर्हंतिसातिक्रांतानसंशयः ९ तथाविधायांद्वादश्यांपितुःश्राद्धंभवेद्यदि ॥ द्वाद
श्यांब्राह्मणान्पूर्वंभोजयित्वाफलंलभेत् ॥ १० ॥ नतत्रव्रतहानिःस्याद्भुंजानस्यततःपरं ॥ पत्नीपाति
व्रतायास्यात्पराधीनोपियोजनः ॥ ११ ॥ सतीर्थपारणांकृत्वापश्चाद्भुक्त्वाफलंलभेत् ॥ अशितानशिता
आपोव्रतपूर्त्यैबुधैःस्मृताः ॥ १२ ॥ नारायणबलिर्दैवात्कर्तव्यःस्याद्यदातदा ॥ तृतीयभागशिष्टायांर
जन्यांश्रपणंचरोः ॥ १३ ॥ विधायहोमंकुर्वीत ततःश्राद्धंसमाचरेत् ॥ ब्राह्मणान्भोजयेत्पश्चाद्द्वादश्यां
पिंडपातनं ॥ १४ ॥ विदधीतततःकुर्यात्स्वजनैःसहभोजनं ॥ प्रातःकालेतुद्वादश्यांयदास्याद्धरिवास
रः ॥ १५ ॥ तदाकुर्वीतहोमादन्व्यतीतेहरिवासरे ॥ तर्पणंश्राद्धहोमादिनित्यंनैमित्तिकंतथा ॥ १६॥
कुर्वीतजलपानादिव्यतीतेहरिवासरे ॥ व्यतीपातश्चसंक्रांतिर्वैधृतिर्वायदाभवेत् ॥ १७ ॥ एकादश्यां
तदाविद्वान्पावमानीऋचःपठेत् ॥ अथवापितृसूक्तानिस्वस्वशाखोदितानिच ॥ १८ ॥ तेनैवतृप्तिमा
यांति पितरोहरिवासरे ॥ यदिमोहात्रकुर्वीतमूढस्तस्मिन्दिनेमम ॥ १९ ॥ पिंडदानंतर्पणंचश्राद्धंहो
मादिकिंचन ॥ जलंमूत्रसमंतच्चहव्यंकव्यंचविट्समं ॥ २० ॥ असकृज्जलपानाच्चसकृत्तांबूलचर्वणात्
उपवासःप्रणश्येतदिवास्वापाच्चमैथुनात् ॥ २१ ॥ तांबूलंमैथुनंतैलंमर्दनंद्यूतमेवच ॥ आहारंतृप्तिपर्यं
तएकादश्यांकरोतियः ॥ २२ ॥ सर्वव्रतंतदानश्येदेकैककरणादपि ॥ दिवास्वापस्तथालापःपाषंडैःस
हवादिता ॥ २३ ॥ वारस्त्रीनटनाट्यादिदर्शनंक्रीडनंतथा ॥ संस्कारश्चशरीरस्यकृमिकीटादिहिंसनं

॥ २४ ॥ व्यायामोपिहरेत्पादंसर्वव्रतफलस्यच ॥ श्मश्रुकर्महरेदर्धंतीर्थेक्षौरंचपादशः ॥ २५ ॥ व्रते
ष्वन्येषुकाम्येषुहानिरल्पाफलेस्मृता ॥ इक्षुरापःफलंमूलंतांबूलंपयऔषधं ॥ २६ ॥ विप्रार्थनागुरोर्वा
क्यघ्नतिनोकामिकव्रतं ॥ यद्येभिर्मद्व्रतंहन्यान्मद्द्रोहीसभवेन्नरः ॥ २७ यद्यशक्तोतिवेलंस्यादुपवासकृतो
नरः ॥ गर्भिणीसूतिकाबालस्तीर्थयात्राकृतश्रमः ॥ २८ ॥ सपादमात्रंकुर्वीततृप्त्यर्थफलभक्षणं ॥ सर्व
थानान्नमश्नीयान्म्रियमाणोपिवैष्णवः ॥ २९ ॥ महापद्यपियोश्नीयादन्नमेकादशीदिने ॥ तस्यापराधं
नसहेलक्ष्म्यादिप्रार्थितोप्यहं ॥ ३० ॥ माषंचलवणंमांसंयोश्नीयात्तिलमात्रतः ॥ एकादश्यांततःसर्वं
व्रतंनिष्फलतांव्रजेत् ॥ ३१ । यावंतस्त्रिषुलोकेषुविद्यंतेपापराशयः ॥ अन्नमाश्रित्यतिष्ठंतिसंप्राप्तेहरि
वासरे ॥ ३२ ॥ अतस्तस्मिन्दिनेगंधमप्यन्नस्यविवर्जयेत् ॥ तंडुलाग्न्यंबुसंयोगात्पिष्टंलवणयोगतः ॥ ३३ ॥
फलंत्रितयसंयोगादन्नंभवतितत्क्षणात् ॥ इक्षोर्विकारास्तस्य स्युर्यावतःकेवलस्यच ॥ ३४ ॥ खर्जूरंना
रिकेलंचप्रियालंपनसादिकं ॥ आम्रंचकदलीद्राक्षाक्षीरंदधिघृतंतथा ॥ ३५ ॥ अनिषिद्धानिमूला
नितथाकंदादिकंचयत् ॥ विनोदकेनयत्पक्वंधान्यंयच्चघृतादिना ॥ ३६ ॥ एतानिफलसंज्ञानियोऽत्यश
क्तोदिनेमम ॥ पादशोश्नातियस्तृप्तेःसंपूर्णतत्फलंव्रजेत् ॥ ३७ ॥ यदिशक्तोपिगृह्णीयादेतान्येकादशीदि
ने ॥ यथातृप्तिस्तथाहानिर्व्रतस्याहिभवेद्ध्रुवं ॥ ३८ ॥ योहिशक्तोपिकुर्वीतव्रतहानिंनराधमः ॥ मम
द्रोहीभवेत्तस्यनरकंप्रतिपद्यते ॥ ३९ ॥ एकदापिचयोहन्याद्व्रतमेतन्नराधमः ॥ संकल्पमात्रंनरकेरौ

रवेपततिध्रुवं ॥ ४० ॥ अर्धहानौतदर्धस्यात्पादहानौचपादशः ॥ अज्ञानाद्वाप्रमादाद्वायोश्नात्यन्नं
हरेर्दिने ४१ ॥ नमस्कारस्यलक्षंतत्प्रायश्चित्तंप्रकीर्तितं ॥ दशगावोथवादद्यात्प्राजापत्यानिवादश॥४२॥
ज्ञात्वापियोन्नमश्नातिमाषंचलवणंफलं ॥ पश्चात्तापोभवेद्यस्यद्विगुणंतस्यकीर्तितं ॥ ४३ ॥ पश्चात्ताप
विहीनस्यप्रायश्चित्तंतुनिष्फलं ॥ कृतेपापेनुतापोवैयस्यपुंसःप्रजायते ॥ ४४ ॥ प्रायश्चित्तंतुतस्योक्तंहरि
संस्मरणंपरं ॥ कृच्छ्रोयुतंचगायत्र्याःप्राणायामचतुःशतं ॥ ४५ ॥ गोप्रदानंचविप्रायनमस्कारायुतंतथा॥
भाजनंषष्टिविप्राणांविदुषांवेदवादिनां ॥ ४६ ॥ मद्भक्तानांविशेषेणदक्षिणाभिःसमन्वितं ॥ यात्रापादुक
याहीनायोजनद्वयसंमिता ॥ ४७ ॥ अश्वत्थस्यतुलस्यावाशालिग्रामस्यवापुनः ॥ अन्यस्याममर्तेर्वा
यास्याद्विंशतिहास्तिका ॥ ४८ ॥ प्रदक्षिणातुसाज्ञेयानमस्कारसमातुसा ॥ अयुतंतत्सुवर्णंवाकर्षमात्रं
द्विजेर्पितं ॥ ४९ ॥पारायणंचवेदस्यसमानीतिविनिश्चितम् ॥ उरसाशिरसादृष्ट्यामनसावचसातथा ५०
पद्भ्यांकराभ्यांजानुभ्यांप्रणामोष्टांगईरितः ॥ सव्यंजानुनिधायादौकराभ्यांवस्पृशन्भुवं ॥ ५१ ॥ जा
नुनादक्षिणेनापिललाटेनभुवंस्पृशेत् ॥ पतित्वादंडवत्पश्चान्मूर्ध्निबद्धांजलिततः ॥ ५२ ॥ उत्तिष्ठेत्रपुन
र्नत्वाजानुभ्यांचस्तुतिंपठेत् ॥ ममध्यानेनसंयुक्तोनमस्कारइतीरितः ॥ ५३ ॥ पादांतरंपदन्यस्तंकरौतुसपु
टीकृतौ ॥ स्तुतिंवाचाहृदिध्यानंप्रदक्षिणइतीरितं ॥ ५४ ॥ प्रातःस्नानंविधायादौप्रातःकर्माणिनित्यशः ॥
समाप्यगरुछेद्यावत्स्यान्मध्यान्हस्तत्रसंवसेत् ॥ ५५ ॥ माध्यान्हिकंविधायैवहविर्भोजीचनित्यदा ॥ प्रति

ग्रहपरित्यागीसायंकर्माणितत्रच ॥ ५६ ॥ विदध्यान्मत्कथालापैर्मद्भक्तैरेवसंगवान् ॥ तांरात्रितत्रनीत्वा
चप्रातःस्नानादिकंततः ॥ ५७ ॥ कृत्वातत्रैवसंध्यांचएवंयात्रामतःपरं ॥ पुराप्राज्ञैरियंप्रोक्तायात्रापापौघ
नाशिनी ॥ ५८ ॥ यानमर्धफलंहंतिपादंहंतिचपादुका ॥ त्रीन्भागान्हंतिवाणिज्यंसर्वंहंतिप्रतिग्रहः ५९
द्रव्यहीनोथयःकुर्याद्भिक्षामुदरपूर्तये ॥ नतस्यफलहानिःस्याद्यदिनेच्छेद्धनार्जनं ॥ ६० ॥ धनार्जनंतु
यःकुर्वन्कुर्याद्यात्रांनतत्फलं ॥ अन्यथातुभवेत्तस्यतीर्थस्नानादिजंफलं ॥ ६१ ॥ अर्जयित्वाधनंयस्तुया
त्रामुद्दिश्ययत्नतः ॥ प्रकरोतिनरोयात्रांतुर्याशस्तस्यहीयते॥६२ ॥दातॄणांसभवेद्भागोद्रव्यदानानुसारतः॥
धनार्जनंविधायाथयात्रामाख्यायदातृषु ॥ ६३ ॥ तद्धनंस्थापयेद्यावदवशिष्टंतुभागशः ॥ ऋणीभवेत्सदा
तॄणांभागशोनात्रसंशयः ॥ ६४ ॥ यस्तुयात्रांनकुर्वीतसचोरइतिकीर्त्यते ॥ लभतेतुफलंदातायात्रातुर्यां
शसंभवं ॥ ६५ ॥ प्रतिग्राहीतुपापीस्याद्वसतेनरकेचिरं ॥ ततोऽधिकांसमांवापिकुर्वन्यात्रांनदोषभाक्
॥६६॥एकभक्तेननक्तेनतथैवायाचितेनच ॥ उपवासेनचैकेनपादकृच्छ्रःप्रकीर्तितः ॥ ६७ ॥ त्रिरावृत्त्या
भवेत्कृच्छ्रोद्वादशाहैरितिस्मृतः ॥ एकभक्तत्रयेणाथत्रिनक्तेनयदृच्छया ॥ ६८ ॥ लाभेनभोजनानांचत्रिदि
नंचचतुर्थकं ॥ उपवासत्रयेणस्यादेषकृच्छ्रोद्वितीयकः ॥ ६९ ॥ सूर्यमंडलमध्यस्थंध्यायेन्मांतीर्थसन्निधौ॥
न्यासादिपूर्विकांस्वीयशाखोक्तांवेदमातरं ॥ ७० ॥ गायत्रींयोजपेत्तस्यपापहानिर्भवेद्ध्रुवं ॥ पूरककुंभ
कोरेचःप्राणायामस्त्रिलक्षणः ॥ ७१ ॥ दशप्रणवसंयुक्तंसप्तव्याहृतिभिर्युतं ॥ मंत्रमुच्चारयन्सम्यक्पूर

यन्दक्षिणेनच ॥ ७२ ॥ नासापुटेनमंत्रंचपुनर्मनसिचिंतयन् ॥ कुंभयित्वाततोवामनासयाविसृजेत्प
ठन् ॥७३॥ मंत्रंतमेवशनकैःप्राणायामोयमीरितः ॥ येनैवविसृजेत्प्राणंपुनस्तेनैवपूरयेत् ॥७४॥ द्वादश
प्रणवैर्यद्वाप्राणमापूर्यकुंभवत् ॥ दशप्रणवमंत्रंतुपूर्वोक्तंत्रिःपठेत्पुनः ॥ ७५ ॥ द्वादशप्रणवैर्भूयोरेचयेद
निलंशनैः ॥ प्राणायामोमहानेषसर्वपापविनाशकः ॥ ७६ ॥ पुनःपुनःप्रकुर्वीतप्राणायामचतुःशतं ॥
प्राजापत्यसमंप्रोक्तंप्रायश्चित्तादिकर्मसु ॥ ७७ ॥ एकवारंप्रसूतायाबालवत्ससमन्विता ॥ पुष्टाशांता
कांस्यदोहाशृंगयोर्हेमभूषिता ॥ ७८ ॥ रक्तवस्त्रावृतापृष्ठेस्वमूल्यदक्षिणायुता ॥ अर्पितावैष्णवेविप्रेकु
टुंबिनियथाविधि ॥ ७९ ॥ गोदानंस्मृतमेतद्धिदारुणाघविदारणं ॥ चतुर्भिर्वारुणैःस्नानैर्गंगादौपुण्यती
र्थके ॥ ८० ॥ चातुर्मास्येथवामाघेवैशाखेप्रातरेवहि ॥ कृतेपुण्यमवाप्नोतिनरोगोदानसंभवं ॥८१ ॥
यथेष्टंभोजनंयत्स्यात्घृतंक्षीरंचशर्करा ॥ तन्मौल्याद्द्विगुणद्रव्यंदक्षिणापरिकीर्तिता ॥८२॥ भोजनेविषमे
पिस्यादशक्तौदक्षिणासमा ॥दक्षिणान्यूनतायांस्यात्फलहानिस्तुभागशः॥८३॥एवंहिषष्टिविप्राणामन्नदानं
महाफलं ॥ स्वशाखाऽध्ययनंपूर्णसकृदेवंतुपाठतः ॥ ८४ ॥ करोतियोव्रतस्थःसन्पारायणमिदंस्मृतं ॥
तांबूलंमैथुनंक्रीडांपरान्नंशववाहनं ॥ ८५ ॥ व्रतस्थोवर्जयेदेतान्हविर्भोजीसरुद्रवेत् ॥ यवानांविंशति
र्माषोभवेन्माषास्तुषोडश ॥ ८६ ॥ कर्षःसुवर्णसंज्ञःस्यात्तद्दानंकृच्छ्रसंमितं ॥ फलाहारंतुयःकुर्याच्छक्तो
पिहिहरेर्दिने ॥ ८७ ॥ नमस्कारायुतंतस्यप्रायश्चित्तप्रकीर्तितं ॥ अर्धहानौतदर्धस्यात्पादहानौतुपादशः

॥ ८८ ॥परदत्तंफलाहारंशक्तःकुर्याद्धरेर्दिने ॥ यथातृप्तिर्भवेद्दातुःपुण्यंपापंचभक्षितुः ॥ ८९ ॥ यच्च शक्तःफलाहारंपरदत्तंतुकारयेत् ॥ दाताप्नोतिफलंपूर्वंअर्धनश्यतिभक्षितुः ॥ ९० ॥ तस्मान्नियमयुक्तःस नृकुर्याद्यद्व्रतंहरेः ॥ एकादश्यांतुयत्प्रोक्तंयद्यथाव्रतहानिदं ॥ ९१ ॥ दशम्यांतुतदर्धंस्यात्तदर्धंपारणो न्नरे ॥ पूर्वंतुपारणायाःस्यात्सर्वमेकादशीसमं ॥ ९२ ॥ इतितेकथितोदविनियमोवैष्णवव्रते ॥ एका दश्यांततोरात्रौस्वापितेपरमात्मनि ॥ ९३ ॥ देवागारेप्रकुर्वीतमत्कथाश्रवणंनरः ॥ मद्भक्तैरेवसंयुक्तोवृ थालापविवर्जितः ॥ ९४ ॥ कुर्याज्जागरणंतावत्स्नानकालोभवेद्यदा ॥ कुर्यान्नीराजनंपश्चात्स्नानंकुर्या द्यथाविधि ॥ ९५ ॥ ॥ इतिश्रीवाराहपुराणेचातुर्मास्यमाहात्म्येनवमोऽध्यायः॥९ ॥ धरण्युवाच ॥ चातुर्मास्येकृतानांवैव्रतानांकीदृशंफलं ॥ तद्धानेःकश्चदोषःस्यात्फलंतस्यतुकिंभवेत् ॥ १ ॥ शुभंवा प्यशुभंवापिप्रायश्चित्तंचतस्यकिं ॥ प्रत्याम्नायाःकथंचस्युस्तन्मेविस्तरतोवद ॥ २ ॥ श्रीवराहउवाच ॥ उपवासंतुमत्प्रीत्यैयस्मिन्कस्मिन्दिनेनरः ॥ कुर्याद्दशगुणंतत्स्यादेकादश्युपवासतः ॥ ३ ॥ कल्प मात्रंसमंलोकवासमाप्नोत्यसंशयं ॥ चतुर्युगसहस्राणिपितामहदिनंस्मृतं ॥ ४ ॥ तावत्येवभवेद्रात्रिःक ल्पोहोरात्रमुच्यते ॥ व्रतहानिर्भवेद्यस्यसकल्पंनरकेवसेत् ॥५॥ प्रायश्चित्तंतुतस्योक्तंनमस्कारदशायुतं ॥ अन्यदायत्कृतंपुण्यंव्रतंपापमथापिवा ॥ ६ ॥ ततोदशगुणंप्रोक्तंचातुर्मास्येतुतत्फलं ॥ एकादश्याभवेद्धानि श्चातुर्मास्येयदातदा ॥ ७ ॥ दशलक्षनमस्काराःकर्तव्यादोषमुक्तये ॥ अन्यथादशकल्पांश्चरौरवेनरकेवसेत्

सेत् ॥ ८ ॥ उपवासोद्विधाप्रोक्तःसांतरश्चनिरंतरः ॥ उपोष्यपारणांकृत्वापुनःकुर्यादुपोषणम् ॥ ९ ॥
सांतरःकथितोलोकेअविच्छिन्नोनिरंतरः ॥ प्रथमेह्न्युपोष्यापिद्वितीयेह्न्युपोषयेत्॥ १० ॥ द्विगुणंतत्फ
लंप्रोक्तंतृतीयेत्रिगुणंभवेत् ॥ दिनवृद्ध्याभवेदेवफलवृद्धिरुपोषणे ॥ ११ ॥ निरंतरंद्वादशाहमुपवासंकरो
तियः ॥ पराकःसाहिविज्ञेयस्तत्फलंकथयामिते ॥ १२ ॥ अशीतेरुपवासानांसफलंप्राप्नुयान्नरः ॥ पक्षोपवासं
यःकुर्यात्सविंशत्यधिकंशतम् ॥ १३ ॥ उपवासाल्लभेतैवतत्फलंविधिपूर्वकं ॥ मासमात्रंतुयःकुर्यादुप
वासंनिरंतरं ॥ १४ ॥ फलंपंचशतानांसलंघनानांलभेद्ध्रुवं ॥ मासोपोषणतुर्यांशंलभेच्चांद्रायणादपि
॥ १५ ॥ चंद्रवृद्ध्यासमश्नीयात्कुक्कुटांडप्रमाणतः ॥ दिनेदिनेह्निर्ग्रासान्ह्रानौहानिंप्रकल्पयेत् ॥ १६ ॥
एवंमासेनपूर्णस्यादेकंचाद्रायणव्रतं ॥ प्राजापत्यंचतुर्भिःस्याद्उपवासोनिरंतरः ॥ १७ ॥ द्वादशाहःपुरा
प्रोक्तःसकृच्छ्रःप्रोच्यतेपिच ॥ प्रत्याम्नायस्तुकृच्छ्रस्यधनिकस्योच्यतेऽधुना ॥ १८ ॥ ॥ कर्षमात्रंसुवर्ण
स्यदानंविप्रायधीमते ॥ गोदानंवाथाविप्राणांरष्टेर्भोजनमीरितं ॥ १९ ॥ शक्तःपदाप्रकुर्वीतयात्रांवैयोजनद्वयं
गतागतेनजायेतयोजनानांचतुष्टयं ॥ २० ॥ परदेशेदुर्गमार्गेयात्रैषापरिकीर्तिता ॥ सुदेशेसुपथेतुस्याद्द्वि
गुणानात्रसंशयः ॥ २१ ॥ स्त्रीबालाशक्तवृद्धानामर्धयोजनसंख्यया ॥ प्रायश्चित्तंवाहनादौस्वदेशेस्यात्तुपूर्व
वत् ॥ २२ ॥ धारणंपारणंयस्तुमासमेकंकरोतिच ॥ मासोपवासविंशांशंफलंतस्यप्रकीर्तितं ॥ २३ ॥
दिनद्वयमुपोष्याथतृतीयेह्नि पारणं ॥ यःकरोतिफलंतस्यद्विगुणंधारणपारणात् ॥ २४ ॥ शिरोव्याह

तिसंयुक्तागायत्रीकीर्तिताजपे ॥ वेदाक्षराणांतुल्यासाशतेनमुनिभिःस्मृता ॥ २५ ॥ चतुःशतेनगाय
त्र्याःसंमितंपरिकीर्तितं ॥ पावमानंमहासूक्तंषट्शतर्चंसुपुण्यदं ॥ २६ ॥ तथोपनिषदःपुण्यागायत्र्यक्षरसं
ख्यया ॥ प्रोच्यंतेपुण्यदालोकेपुण्यसूक्तानियान्यपि ॥ २७ ॥ संहितापाठतःप्रोक्तंद्विगुणंपदपाठतः ॥
त्रिगुणंक्रमपाठेस्याज्जटापाठेतुषड्गुणं ॥ २८ ॥ महाभारतपाठस्तुवेदतुल्यःप्रकीर्तितः ॥ पुराणानांतद
र्धेनस्मृतीनांचतथोच्यते ॥ २९ ॥ भारतेभगवद्गीतातथानामसहस्रकं ॥ गायत्र्याःसंमितंप्रोक्तंपुण्येपाप
क्षयेतथा ॥ ३० ॥ पाठेनयत्फलंप्रोक्तंअर्थज्ञानाच्चतुर्गुणम् ॥ मद्भक्तेभ्यःश्रावणाच्चपुण्यंदशगुणंस्मृतं ॥
व्याख्यानाच्चापिशिष्येभ्यःपुण्यंशतगुणंस्मृतम् ॥ ३१ ॥ भूमिदानंयथालोकेमहादानमितीरितम् ॥
विद्यादानंदशगुणंततोपिस्यात्फलप्रदम् ॥ ३२ ॥ ॥ धरण्युवाच ॥ ॥कस्मैदानंप्रकर्तव्यंसुवर्ण
स्येतरस्यवा ॥ कथंवापात्रतामेतिब्राह्मणश्चेतरोथवा ॥ ३३ ॥ श्रीवराहउवाच ॥ वसेद्गुरुगृहेयस्तु
भिक्षान्नाशीस्तुतिंपठन् ॥ अधीत्यशाखांसंपूर्णांसयथोक्तंफलंलभेत् ॥ ३४ ॥ शिष्यस्याध्यापकस्यापिसं
हितापाठतःफलम् ॥ प्रत्यक्षरंतुगायत्रीसकृत्पाठसमंलभेत् ॥ ३५ ॥ पदपाठेतदर्धंस्यात्क्रमपाठेतदर्धकम् ॥
संहितापाठतोद्विघ्नंगीतापाठेफलंस्मृतम् ॥ ३६ ॥ ततोप्युपनिषत्पाठेद्विगुणंफलमीरितम् ॥ पाठेचवा
ठनेतुल्यफलंवैगुरुशिष्ययोः ॥ ३७ ॥ अधीताच्चिगुणंस्यात्तुफलंवैकुंठपाठतः ॥ तदर्धंलेखपाठात्तुफ
लमुक्तंमनीषिभिः ॥ ३८ ॥ अधीत्यापिनयस्यस्यात्कंठेपाठःसमंस्वतः ॥ कृतेयत्नेपिदैवेनसलभेत्पाठ

मात्रजं ॥ ३९ ॥ प्रज्ञायामपिसत्यां तुविस्मरेत्पठितांश्रुतिं॥अनास्थयाप्रमादेनमृतोगर्दभतांव्रजेत्॥४०॥
यावद्वेदोत्थवर्णानांपठितानांचविस्मृतिः ॥ तावच्छुक्कासवर्षाणिखरयोनिंततःपरं ॥ ४१ ॥ पाठपुण्या
र्जितंलोकंसलभेन्नात्रसंशयः ॥ स्वशाखांप्रथमंयस्तुपठित्वान्यांपठेद्यदि ॥ ४२ ॥ प्रत्यक्षरंतुलभतेगाय
त्र्याद्विगुणंफलम् ॥ पठित्वापिस्वकांशाखांमदुत्कर्षनवेत्तियः ॥ ४३ ॥ ममपूजायुतश्चापिसोर्धफलम
वाप्नुयात् ॥ मद्भक्तिवर्जितायश्चकेवलंपाठकोभवेत् ॥ ४४ ॥ लभेत्फलस्यतुर्यांशंमद्द्वेष्टुर्निष्फलंस्मृतम् ॥
अंगानिवेदाश्चत्वारोमीमांसान्यायविस्तरः ॥ ४५ ॥ पुराणंधर्मशास्त्रंचविद्याह्येताश्चतुर्दश ॥ आयुर्वेदोधनुर्वे
दोगांधर्वंचार्थशास्त्रकं ॥ ४६ ॥ उपविद्याश्चतस्रः स्युरेवमष्टादशस्मृताः ॥ शिक्षाकल्पोव्याकरणंनिरुक्तंछं
दज्योतिषम् ॥ ४७ ॥ इत्यंगानितुवेदस्ययोधीतेतत्फलंशृणु ॥ संहितापाठतोप्यर्धंलभतेपाठतःफलं ॥ ४८
शिक्षाघ्राणंतुवेदस्यकल्पःपाणीप्रकीर्तितौ ॥ मुखंव्याकरणंतुस्यान्निरुक्तंश्रोत्रमुच्यते ॥ ४९ ॥ ज्योतिषं
नयनंप्रोक्तंछंदःपादावितिस्मृतौ ॥ शिक्षाकल्पनिरुक्तानांछंदसश्चार्थवित्तये ॥ ५० ॥ येतूद्योगंप्रकुर्वंतिफ
लंतेषांचतुर्गुणम् ॥ भवेत्पाठात्ततोज्योतिःशास्त्रार्थज्ञानजंफलम् ॥ ५१ ॥ संहितापाठजंपुण्यंगणित
ज्ञोलभेद्ध्रुवं ॥ ज्योतिषांसंहिताज्ञानादर्धंतुलभतेफलम् ॥ ५२ ॥ जातकप्रश्नयोर्ज्ञानान्नकिंचित्पुण्य
मीरितं ॥ वेदाध्ययनहीनोयोजातकप्रश्नमात्रवित् ॥ ५३ ॥ नवेत्तिगणितंयस्तुज्ञेयोनक्षत्रसूचकः ॥
दानंनार्हतिविप्रःससर्वकर्मसुगर्हितः ॥ ५४ ॥ स्वल्पामपितुस्वांशाखांयोनधीत्यद्विजाधमः ॥ अंगादिष्वन्य

शास्त्रेषुसक्तःसतुविगर्हितः ॥ ५५ ॥ किंचिच्छाखामधीत्यापियश्चोपनिषदःपठेत् ॥ ज्ञानाधिक्यायशास्त्राणिवेदज्ञानार्थमेववा ॥ ५६ ॥ अर्थातेदानपात्रस्यात्पुण्याधिक्येनयुज्यते ॥ यतोत्रिप्रेषुवृद्धत्वंपूज्यत्वंज्ञानतःस्मृतं ॥ ५७ ॥ ज्ञानाधिक्येनतेषुस्यात्पात्रापात्रविचारणा ॥ पुण्याधिक्येनवाज्ञेयापाठकानांचपात्रता ॥ ५८ ॥ ज्ञानिपाठकयोर्मध्येज्ञानीपुण्याधिकोमतः ॥ ततःपूज्यत्वमस्यस्यात्ज्ञानिनास्तित्रिनिमेमतिः ॥ ५९ ॥ नहिज्ञानेनसदृशंपवित्रमिहविद्यते ॥ प्रियोहिज्ञानिनोत्यर्थमहंसचममप्रियः ॥ ६० ॥ ज्ञानंतुपूर्वमेवोक्तंममभक्तस्यलक्षणे ॥ परवादिजयेशक्तिर्यस्यस्यान्नद्गतिःपुनः ॥ ६१ ॥ सएवश्रेष्ठतांयातिपाठकानांशतादपि ॥ वेदादिसर्वविद्यानामर्थज्ञानाययःपठेत् ॥ ६२ ॥ शास्त्रंव्याकरणंनामलभेद्वेदसमंफलं ॥ ज्ञानाधिक्येनलभतेवेदार्थज्ञानजंफलम् ॥ ६३ ॥ मीमांसाद्विविधाप्रोक्ताकर्मणोब्रह्मणस्तथा ॥ वेदार्थज्ञानतुल्याद्याद्वितीयायाःफलंशृणु ॥ ६४ ॥ प्रत्यक्षंतुलभतेगायत्रीशतजंफलं ॥ येनूपयोगिनःसाक्षाद्ग्रंथास्तत्रभवंतिहि ॥ ६५ ॥ तेप्यर्धफलदाज्ञेयाव्यवधानात्तुपादशः ॥ वेदोपनिषदामर्थज्ञानाधिक्यायचेत्पठेत् ॥ ६६ ॥ प्रदीपंसर्वविद्यानांयोविद्वान्न्यायविस्तरं ॥ वेदार्थज्ञानतुल्यंतुफलंतस्यप्रकीर्तितं ॥ ६७ ॥ केवलंजीविकार्थंतुयःपठेन्यायविस्तरं ॥ हेतुवादरतोब्रह्मजिज्ञासांनैवयःपठेत् ॥ ६८ ॥ ससृगालोभवेदेवपठिताक्षरसंख्यया ॥ वर्षाणिनात्रसंदेहोवृथाभाषणतत्परः ॥ ६९ ॥ पुराणंवैष्णवंमात्स्यंकौर्म्यंभागवतंतथा ॥ आदित्यंगारुडंस्कांदंमार्कंडेयमथाष्टमम् ॥ ७० ॥ ब्रह्मब्रह्मांडलिंगंचब्रह्मवैवर्तमेवच ॥

भविष्योत्तरमाग्नेयंपाद्मंवामनमेवच ॥ ७१ ॥ सप्तदशंतुवायव्यंइदमष्टादशंस्मृतं ॥ सर्वेष्वपिपुराणेषु
श्रेष्ठंभागवतंस्मृतं ॥ ७२ ॥ वेदतुल्यफलंपाठश्रवणेचतदर्धकं ॥ अर्थश्रवणतश्चास्यपुण्यंदशगुणंस्मृतं
॥ ७३ ॥ वक्तुःस्याद्द्विगुणंपुण्यंव्याख्यातुश्चशताधिकं ॥ अन्यान्यपिपुराणानिवैष्णवादीनियानिच
॥ ७४ महिम्नःकीर्तनंयत्रममस्यान्मद्भक्तस्यवा ॥ मद्भक्तस्याथवायत्रतद्वेदार्थफलंस्मृतं ॥ ७५ ॥ विष्णु
धर्मोत्तरंशैवंबृहन्नारदमेवच ॥ भगवतीपुराणंचलघुनारदमेवच ॥ ७६ ॥ भविष्य पर्वषष्ठंस्यात्तंत्रंभागवतं
तथा ॥ अष्टमंनारसिंहंचपुराणंरेणुकाभिधं ॥ ७७ ॥ दशमंतत्वसारंस्याद्वायुप्रोक्तंतथैवच ॥ नंदिप्रोक्तं
द्वादशंस्यात्तथापाशुपताभिधं ॥ ७८ ॥ यमनारदसंवादंतथाहंसपुराणकं ॥ विनायकपुराणंचबृहद्ब्र
ह्मांडमेवच ॥ ७९ ॥ पुण्यंविष्णुरहस्यंस्यात्तथाष्टादशमुच्यते ॥ एतान्युपपुराणानिपुराणार्थफलानिच ॥
॥ ८० ॥ भारतंवेदतुल्यंस्यादर्थतोधिकमुच्यते ॥ तत्रापिभगवद्गीताविष्णोर्नामसहस्रकं ॥ ८१ ॥
शताधिकफलंप्रोक्तंभारतादपिसर्वशः ॥ श्रोतार्धफलमाप्नोतिभक्तितःशृणुयात्तुयः ॥ ८२ ॥
भारतादर्धफलकंरामायणमपीरितं ॥ सर्वेष्वेतेषुशास्त्रेषुपंचरात्रागमोधिकः ॥ ८३ ॥ ॥ भगवद्गीत
यातुल्यंफलंतस्याखिलस्यच ॥ भारतीयकथाबंधंमद्भक्तैरेवनिर्मितं ॥ ८४ ॥ तत्काव्यंयःपठेत्ता
ज्ञोदशांशंफलमाप्नुयात् ॥ मद्भक्तैर्निर्मितंयत्तुशतांशफलदंस्मृतं ॥ ८५ ॥ यःकरोतिस्वयंकाव्यंकल्पयि
त्वास्वयंकथां ॥ तच्छ्रमोव्यर्थतामेतितदध्येताचदोषभाक् ॥ ८६ ॥ पौराणींभारतींवापिकथांग्रथ्नातियः

स्वयं ॥ ममाभक्तोपिलभतेशक्रलोकाधिवासताम् ॥ ८७ ॥ प्रत्यक्षरंवर्षमेकंवासस्तस्यभवेध्द्रुवम् ॥
ममभक्तोहिलभतेबृहस्पतिसलोकतां ॥ ८८ ॥ तत्तद्भाषाकृतंकाव्यंमद्वर्णनसमन्वितं ॥ भारतस्यसहस्रां
शंश्रोतुर्वक्तुःफलंस्मृतं ॥ ८९ ॥ निर्मातुस्तुभवेत्पुण्यंसाधुशब्दशतांशतः ॥ नरस्तुतिंतुयःकुर्याज्जीविका
र्थंकवि क्वाचित् ॥ ९० ॥ निष्फलस्तुश्रमःप्रोक्तस्तदध्येतानुदोषकृत् ॥ उन्मादेनतुयःकुर्यात्काम्यादीनांच
वर्णनं ॥ ९१ ॥ सहिश्वयोनिमाप्नोतिवर्षाण्यक्षरसंख्यया ॥ वेदोक्तार्थानुसारेणमन्वाद्याःस्मारकाःस्मृताः
॥ ९२ ॥ तेषांवैस्मृतयोनानाधर्मनिर्णायिकाभुवि ॥ ब्रह्मक्षत्रियविट्शूद्रावर्णाश्चत्वारएवहि ॥ ९३ ॥
प्रतिलोम्यानुलोम्येनतेभ्योनानाहिजातयः ॥ तत्रकेचिद्वैदिकेषुकर्मस्वधिकृताःपरे ॥ ९४ ॥ अवैदिकेषु
मंत्रेषुकेचित्पशुसमाःस्मृताः ॥ अवैदिकेष्वपिप्रोक्तोनाधिकारोनृणामिह ॥ ९५ ॥ ब्रह्मचारीगृहस्थोवावा
नप्रस्थोयतिस्तथा ॥ प्रोक्ताआश्रमिणस्त्वेतेभिन्नमार्गाएवहि ॥ ९६ ॥ कदाकुत्रकथंकर्मकेनकार्यमितिस्फु
टं ॥ धर्मशास्त्रात्तुनिर्णेयमन्यथादोषभाग्भवेत् ॥ ९७ ॥ अदेशेयत्कृतंकर्मअकालेनाधिकारिणा ॥ प्रत्ये
कंतद्भवेद्व्यर्थंप्रत्यवायोधिकोभवेत् ॥ ९८ ॥ तस्मादावश्यकंतत्तुविप्राणांतुविशेषतः ॥ स्मृत्यर्थज्ञानतोपि
स्याद्वेदार्थज्ञानतोधिकं ॥ ९९ ॥ ऋग्वेदस्योपवेदःस्यादायुर्वेदोहिवैद्यकं ॥ परेषामुपकारायस्वस्यनीरोग
तार्थिना ॥ १०० ॥ जीविकार्थमपीदंहिपठितव्यंद्विजातिभिः ॥ ब्राह्मणंरोगिणंक्षीणमुपचारेणजी
वयेत् ॥ १ ॥ ब्रह्महत्याभवंपापंतस्यनश्यतिवैध्रुवं ॥ यतःसलभतेपुण्यंचतुःकृच्छ्रसमुद्भवं ॥ २ ॥ एवं

पुण्यंभवेत्तस्यतत्तद्वर्णानुसारतः ॥ यत्नेकृतेपियोरोगीनजीवत्यायुषःक्षयात् ॥ ३ ॥ सोऽर्धफलमवाप्नोति
नाऽकार्याविचारणा ॥ जीतिकार्थंतुयःकुर्यादुपविद्याचतुष्टयं ॥ ४ ॥ इहलोकेफलंतस्यपरलोकेनाकिंच
न ॥ गांधर्वमप्यधी.यीतमत्पुरोयश्चगायति ॥ ५ ॥ मद्भक्तियुक्तोलभतेगांधर्वलोकमुत्तमं ॥ धनुर्वेदोदंड
नीतिर्ब्राह्मणानांनजीविका ॥ ६ ॥ क्षत्रियाणांतुसाप्रोक्तावेदादर्धफलप्रदा ॥ फलान्येतेषुसर्वेषुपुण्यंज्ञा
नानुसारतः ॥ ७ ॥ विवेकस्तस्यकर्तव्योद्रव्यदानेविशेषतः ॥ अन्नस्यक्षुधितंपात्रंपानीयस्यपिपासितं
॥ ८ ॥ तृणग्राहीपयःस्त्रावीपयोग्राहीविषस्त्रवः ॥ पात्रापात्रविचारोयंयथापन्नगधेनवः ॥ ९ ॥
द्रव्यदानेतुकर्तव्यंविशेषात्पात्रवीक्षणं ॥ तृणेनगविदुग्धंस्याद्दुग्धमप्युरगेविषम् ॥ १० ॥ पात्रापात्र
विचारेणसत्पात्रेदानमुत्तमं ॥ यथापुण्याधिकंपात्रंतथादानफलाधिकं ॥ ११ ॥ ज्ञानाधिक्याद्भवेत्पुण्यंत
थापाठश्रमेणवा । मद्भक्तएवपात्रंस्यान्मय्यभक्तोनसर्वथा ॥ १२ ॥ मद्द्वेषीपरिहर्तव्योदर्शनेभाषणादिषु ॥
संगवांश्चभवेन्नित्यंमद्भक्तैरेवनान्यथा ॥ १३ ॥ यच्छुल्कादधिकंदद्यात्तद्दानंपरिकीर्तितं ॥ देशकाल
विशेषेणतत्तत्पात्रविशेषतः १४ ॥ दानस्यफलमुद्दिष्टमधिकन्यूनमेवच ॥ विप्रशुल्कंतुयोमूढोन
दद्याच्छक्तिसंभवे ॥ १५ ॥ विष्टाकृमिर्भवेदेषसुवर्णयवसंख्यया ॥ दिव्यवर्षाणिनैवात्रत्वयाका
र्यस्तुसंशयः ॥ १६ ॥ यत्तुज्ञानवताकर्माक्रियतेपापदायकं ॥ तन्न्यूनफलकंप्रोक्तंअज्ञानिकृतपात
कात् ॥ १७ ॥ यथायथाधिकंज्ञानंपुण्याधिक्यंतथातथा ॥ यत्तुज्ञानवताकर्माक्रियतेपुण्यकारकं

॥ १८ ॥ अधिकंतत्फलंप्रोक्तंअज्ञानिकृतकर्मणः ॥ यथायथाधिकंज्ञानंपापहानिस्तथातथा ॥ १९ ॥ यथैधांसिसमिद्धोग्निर्भस्मसात्कुरुतेक्षणात् ॥ ज्ञानाग्निर्दुष्टकर्माणिभस्मसात्कुरुतेतथा ॥ २० ॥ वर्णाधिक्यं यथाहेम्नोवह्निसंगेनजायते ॥ पुण्याधिक्यंतथादेविज्ञानसंगेनजायते ॥ २१ ॥ पुण्येनवर्धतेपुण्यंपापं स्वल्पंहिजायते ॥ पापेनपापवृद्धिःस्यात्पुण्यंचस्वल्पतांव्रजेत् ॥ २२ ॥ अतिसूक्ष्मोविचारोयद्दुर्ज्ञेयः स्थूलदृष्टिभिः ॥ तथाप्यतद्विचार्यंस्यात्तत्त्वाज्ञानानुसारतः ॥ २३ ॥ यस्तुसत्यधिकारेपिज्ञानेवापठनेऽ दिवा ॥ प्रयत्नंनैवकुर्वीतसमृतोजायतेपशुः ॥ २४ ॥ ज्ञानाद्वाध्ययनाद्वापिपुण्यंविप्रस्यवर्धते ॥ इतिसंक्षेपतःप्रोक्तमेतत्पृष्टंत्वयानघे ॥ २५ ॥ ऊहनीयमनेनैवपुण्यंपापमथापिवा ॥ धर्मास्तुबहवः संतितथापापान्यनेकशः ॥ २६ ॥ तत्रतत्रोदिताश्चैवमुनिभिश्चदयालुभिः ॥ सर्वसारमिदंप्रोक्तंरह स्यंपुरतस्तवः ॥ २७ ॥ गूहनीयंप्रयत्नेनमद्भक्तायचदीयते ॥ प्रियासिममभक्तासिततएतदवादिषम् ॥ २८ ॥ इतिश्रीवाराहपुराणेचातुर्मास्यमाहात्म्येदशमोऽध्यायः ॥ १० ॥ ॥ धरण्युवाच ॥ ॥ लक्षवर्तिफलंकिंतत् लक्षहोमफलंचकिं ॥ तथैवलक्षपद्मानांफलंकिंपरिकीर्तितं ॥ १ ॥ तुल सीनांतथालक्षपुष्पाणांचापिविंफलं ॥ वदविस्तरतःस्वामिन्श्रोतुमिच्छामितेमुखात् ॥ २ ॥ श्रीवराहउवाच ॥ ॥ फलंविंशतिसाहस्रैर्नमस्कारैस्तुयत्स्मृतं ॥ तत्फलंलक्षवर्तीनांघृताक्तानामुदी रितं ॥ ३ ॥ तैलाक्तानांतदर्धंस्याच्छुष्काणांचतदर्धकं ॥ परकीयंतुकार्पासंसमादायकरोतियः

॥ ४ ॥ सोप्यर्धफलमाप्नोतिव्रतीनांकरणादपि ॥ ननस्कारादिलक्षेषुतद्दशांशेनतर्पणं ॥ ५ ॥
तद्दशांशेनहोमःस्याद्दशांशंविप्रभोजनं ॥ विधिनैवंतुयःकुर्यात्तस्यस्याद्द्विगुणंफलं ॥ ६ ॥ तिला
ज्येनतुयःकुर्यान्महाव्याहृतिभिर्हविः ॥ लक्षमेकंतुतस्यस्यात्पंचायुतनमःफलं ॥ ७ ॥ सत्यांशक्तौच
योग्यत्वेकारयेद्द्विप्रहस्ततः ॥ त्रीन्भागाल्लभतेपुण्यंविधिवच्छुल्कदानतः ॥ ८ ॥ चतुर्थांशोविन
श्येतत्पुण्यस्यापरेणतु ॥ कारयेदत्यशक्तोयस्तत्पुण्यंषोडशांशतः ॥ ९ ॥ नाशमाप्नोतिनस्त्रीणा
माधिकारोस्तिवैदिके ॥ अतोवैदिकमंत्राणांजपहोमादिनक्वचित् ॥ १० ॥ कारणाकारणाद्वापि
स्त्रीशूद्राणांफलंनहि ॥ प्रदक्षिणानमस्कारलक्षवर्त्यादिकर्मणां ॥ ११ ॥ होमादिकारणंनैवद्विप्रह
स्तेनदोषकृत् ॥ व्याहृतीनांसहस्रस्यहोमेशुल्कंद्विजेर्पयेत् ॥ १२ ॥ यत्रमात्रंसुवर्णंतुलक्षहोमेश
तंयवाः ॥ सुवर्णस्यप्रदानेनत्रीन्भागाल्लभतेफलं ॥ १३ ॥ धनिकोद्विगुणंदद्यात्त्रिगुणंतुनृपोधनः ॥
यवार्धंतुदरिद्रेणदातव्यंपुण्यलब्धये ॥ १४ ॥ दद्यादतिदरिद्रेणतदर्धंशुल्कमेवच ॥ पत्याज्ञयातुगृह्णी
यात्सुकृतंवेदमंत्रजं ॥ १५ ॥ मातासुतार्थंगृह्णीयान्नतदादोषउच्यते ॥ मातापत्नीतथापुत्रउपा
ध्यायोथपोषकः ॥ १६ ॥ यदर्पयेद्गृहीत्वैवविप्रेभ्यःपुण्यसंचयम् ॥ अर्पयेद्यजमानायतद
र्धंलभतेफलम् ॥ १७ ॥ लभेयुस्तेतृतीयांशंमात्राद्याःसर्वएवहि ॥ परकीयस्यहस्तेनगृह्णीयाद्यदि
तत्फलम् ॥ १८ ॥ चतुर्थांशंतुलभतेयजमानोनसंशयः ॥ भागद्वयंपरस्यस्याद्द्विवित्रयपिकारयेत्

॥ १९ ॥ हेलयाकारयेद्यस्तुयजमानाज्ञयानरः ॥ पुण्यंकर्मनतस्यस्यात्फलंकिंचित्सुकर्मजं ॥ २० ॥
यजमानस्तुलभतेयथोक्तंकर्मजंफलम् ॥ अकृत्वैवतुयःकर्मब्राह्मणोद्रव्यलोभतः ॥ २१ ॥ प्रमादा
द्धेलयावापिशुल्कग्राहीसदोषभाक् ॥ तद्वतंयद्भवेत्पुण्ययत्किंचित्पुण्यतीर्थजम् ॥ २२ ॥ शुल्क
दातुर्भवेत्पुण्यंसविप्रःपापभाग्भवेत् ॥ पुण्यकर्मण्ययंप्रोक्तःपापकर्मणिमेशृणु ॥ २३ ॥ अभिचारिक
होमंतुमारणादिफलार्थिनः ॥ यजमानस्ययःकुर्याच्छुल्कग्राहीद्विजाधमः॥ २४ ॥ तस्यपापस्यतुर्यांशं
लभतेनात्रसंशयः ॥ आचार्यत्वंतुयःकुर्यात्तस्मिन्कर्मणिपापके ॥ २५ ॥ फलार्धंलभतेसत्यंय
जमानस्तथाखिलम् ॥ पापस्यतुभवेद्वृद्धिर्नात्रभंगःकदाचन ॥ २६ ॥ मात्रादीनांतुपंचानाम
निच्छूनांचतत्फलम् ॥ तुरीयांशंभवेत्पापंफलेच्छूनांतदर्धकं ॥ २७ ॥ अनिच्छतःपरस्यस्यादर्धमिच्छो
स्तदर्धकं ॥ फलंकृत्स्नस्यपापस्यनात्रकार्याविचारणा ॥ २८ ॥ अन्येष्वपिचपापेषुकर्मस्वेवंफलंध्रुवं ॥
अतःपुण्येसहायःस्यान्नस्यात्पापेतुकर्मणि ॥ २९ ॥ विक्रयाद्वेदमंत्राणांब्राह्मणोयद्धनंलभेत् ॥ तुर्यांशं
तस्यवित्तस्यदद्याद्दोषापनुत्तये ॥ ३० ॥ दरिद्रोर्धंतदर्धंचमहादारिद्र्यपीडितः ॥ धनिकोर्धंधनंदद्याद्वेद
विक्रयजंचयत् ॥ ३१ ॥ महाधनस्तुत्रीन्भागानूदत्त्वाशुद्धिमवाप्नुयात् ॥ अयमेवभवेयान्योदुर्दानस्य
प्रतिग्रहे ॥ ३२ ॥ होमेचवेदमंत्राणामयमेवविधिःस्मृतः ॥ नमस्कारादिपुण्यानांविक्रेतायद्धनंलभेत् ॥ ३३ ॥
अष्टमांशंतुविप्रायदत्त्वामुच्येतदोषतः ॥ विधिर्योवेदमंत्राणांविक्रयेपरिकीर्तितः ॥ ३४ ॥ तदर्धेनात्रज्ञात

व्योदरिद्रादेर्यथाक्रमं ॥ त्रीन्भागान्लभतेपुण्यंविधिवच्छुल्कदानतः ॥ ३५ ॥ धरण्युवाच ॥ दरिद्रः कइहप्रोक्तोधनिकोमध्यमोथवा ॥ महादरिद्रश्चकथंधनिकोवाथवाकथं ॥ शुल्कंकथंतुदातव्यंपुण्यकर्म सुतद्वद ॥ ३६ ॥ ॥ श्रीवराहउवाच ॥ ॥ सदाचाररतोविप्रोधनार्जनपराङ्मुखः ॥ कुटुंबव्ययप्य चलमतिःसदरिद्रइतीरितः ॥ ३७ ॥ पोषणीयकुटुंबस्यनिर्वाहोयावताभवेत् ॥ तावदेवसुखंयेनलभ्यतेप्र तिवार्षिकं ॥ ३८ ॥ ऋणंयस्यतुनास्त्येवसमध्यमउदाहृतः ॥ वर्धयित्वाधनंयस्तुग्रासंवार्षिकमर्जयेत् ॥ ॥ ३९ ॥ सतुवैधनिकःप्रोक्तएवंवर्षेणयःपुमान् ॥ वर्षद्वयमितंग्रासंसहिधन्यतरःस्मृतः ॥ ४० ॥ अ धिकस्यार्जकोयःस्यात्सधन्यतमईरितः ॥ धनेनैवविनायस्तुग्रासंवार्षिकमर्जयेत् ॥ सवैवीरइतिज्ञेयस्ता रतम्यंचपूर्ववत् ॥ ४१ ॥ धनस्ययावतावृद्ध्यानिर्वाहोवार्षिकोभवेत् ॥ तद्विमूलंधनंप्रोक्तमन्यद्धनमि तीरितं ॥ ४२ ॥ यस्यमूलधनादन्यद्विद्यतेद्विगुणंधनं ॥ सहिधन्यतरोज्ञेयस्ततोधन्यतमोधिकः ॥ ४३ ॥ धनीधन्यतरस्तत्रमध्यमौपरिकीर्तितौ ॥ यस्तुधन्यतमःसस्यात्सभवेद्धनिकोनरः ॥ ४४ ॥ वीरोपिमध्य मःप्रोक्तस्तथावीरतरोहिसः ॥ स्यात्तुवीरतमोलोकेधनिकोतःपरःस्मृतः ॥ ४५ ॥ धनिकाद्विगुणोयःस्या न्महाधनिकइत्यपि ॥ भर्ताशतकुटुंबानांवीरोपिस्यान्महाधनः ॥ ४६ ॥ सहस्रंयःकुटुंबानांबिभर्तिसनृ पःस्मृतः ॥ सामंतेनसमोज्ञेयोराजास्यात्तुततोधिकः ॥ ४७ ॥ पंचयोजनकेदेशेयस्याज्ञामानयेज्जनः ॥ ससामंतइतिज्ञेयोराजादशगुणस्ततः ॥ ततोदशगुणोज्ञेयोमहाराजस्ततःपरं ॥ ४८ ॥ राजाधिराजो

विज्ञेयोमहाराजाद्दशाधिकः ॥ ततोदशगुणोज्ञेयश्चक्रवर्तीतिनिश्चितं ॥ ४९ ॥ यस्तुस्यान्मध्यमादर्धः
सदरिद्रइतीरितः ॥ महादरिद्रस्तस्यार्धंतदर्धस्यादकिंचनः ॥ ५० ॥ गोदानंयत्पुराप्रोक्तंतद्विदुर्धनिकस्य
तु ॥ क्रमादेकोत्तरगुणंचक्रवर्त्यंतमेवतत् ॥ ५१ ॥ कर्षद्वयंसुवर्णस्यगोदानंपुण्यलब्धये ॥ महाधनेन
कर्तव्यंत्रिकर्षाणांनृपेणतु ॥ ५२ ॥ राजाचतुर्णांकिर्षाणांएवमेकोत्तरंभवेत् ॥ सप्तानांहेमकर्षाणांगोदानं
चक्रवर्तिनः॥५३॥ शतंषष्ट्याधिकंहेमयवानांमध्यमेस्मृतं॥गोदानंतुदरिद्रस्यस्यादशीतियवात्मकं ॥५४॥
महादरिद्रेतस्यार्धंतस्यार्धंस्यादकिंचने ॥ क्रमेणानेनविज्ञेयंसुवर्णस्यापिदानकं ॥ अयमेवक्रमोज्ञेयःशु
ल्कदानेयथायथं ॥ ५५ ॥ इतिश्रीवाराहपुराणेचातुर्मास्यमाहात्म्येएकादशोऽध्यायः ॥ ११ ॥
॥श्रीवराहउवाच ॥ ॥ अधुनाशुल्कमावक्ष्येयत्त्वंपृष्टवतीधरे ॥ नमस्कारश्चगायत्रीप्रदक्षिणतथापिवा
॥ १ ॥ यात्रादिकंत्वापूर्वोक्तंविप्रहस्तेनकारयेत् ॥ मध्यमस्तुतदादद्यान्नमस्कारसहस्रके ॥ २ ॥ यत्रान्
द्वादशसंख्याकान्धनिकोद्विगुणंस्मृतं ॥ एवमूहेनसर्वत्रवृद्धिःस्यादुत्तरोत्तरं ॥ ३ ॥ नशुल्कंशक्यतेदातुं
मत्कथाश्रवणस्यहि । यतोमहत्फलंतस्यततस्तेनैवशुल्कभाक् ॥ ४ ॥ मद्भक्तानुग्रहेणैवतत्फलंल
भतेनरः ॥ वाचकस्यमहापुण्यंतथाश्रोतुर्भवेद्द्वयोः ॥ ५ ॥ श्रोताचैवतथावक्तायदिनिर्व्याजकावुभौ ॥
विप्रस्यकुर्वतःपुण्यंयोनिर्व्याहंसमाचरेत् ॥ ६ ॥ यावद्दिनकृतंपुण्यमर्वेदातालभेद्ध्रुवं ॥ त्रिवेकस्तुपुराप्रो
क्तःपुण्यस्यहिपरोमया ॥ ७ ॥ वेदपाठादिकर्माणिकुर्वतेदीयतेतुयत् ॥ ब्रह्ममीमांसकादीनांव्याख्यात्र

द्येतुरेववा ॥ ८ ॥ यस्तंनिर्वाहकग्रासंप्रापयेद्भक्तिसंयुतः ॥ अर्धपुण्यंसलभतेतावद्दिनकृतस्यहि ॥ ९ ॥
आहूयस्वसमीपंतंभक्त्यादद्याच्चयोधनं । तुरीयांशंलभेत्पुण्यंयाचितश्चषडंशभाक् ॥ १० ॥ याचमानो
पिनोदद्यात्सत्यांशक्तौस्वशक्तितः ॥ तस्यपुण्यंसमादायगृहिणोयातियाचकः ॥ ११ ॥ याचकोयस्य
भग्नाशोगृहात्प्रतिनिवर्तते ॥ सतस्मैदुष्कृतंदत्वापुण्यमादायगच्छति ॥ १२ ॥ सन्मानात्तपसोवृद्धिरपमा
नात्तपःक्षयः ॥ वंदितःस्वर्चितोविप्रोऽदुग्धागौरिवसीदति ॥ १३ ॥ अतोब्राह्मणपुण्यस्यलाभाय
स्वसुकर्मणः ॥ रक्षणायाधनाशायकुर्याद्ब्राह्मणतोषणम् ॥ १४॥ दृष्टिंदद्यान्मनोदद्याद्वाचंदद्याच्चसुव्रतः॥
उत्थायचासनंदद्यादेषधर्मःसनातनः ॥ १५ ॥ तृणानिभूमिरुदकंवाक्चतुर्थीचसूनृता ॥ एतानिचस
तांगेहेनोच्छिद्यंतेकदाचन ॥ १६ ॥ ग्रासादर्धमपिग्रासमर्थिभ्यःकिंनदीयते ॥ इच्छानुरूपविभवःक
दाकस्यभविष्यति ॥ १७ ॥ स्ववृत्त्यापरवृत्त्यावायद्गृहस्थैर्धनार्जनं ॥ अन्यायादथवान्यायाद्यद्धनंस्वल्प
मेववा ॥ १८ ॥ दीयतेब्राह्मणेतच्चसर्वस्यापिविशोधनं ॥ यत्तुसेवांप्रगृह्यैवधनंविप्रायदीयते॥ १९ ॥
नतद्दानंभवेदेवतद्धिशुल्कंप्रकीर्तितं ॥ पशवोमृगपक्ष्याद्याःकुर्वंतिस्वस्यपोषणं ॥ २० ॥दुर्लभेमानुषेदेहेकु
र्याद्ब्राह्मणतोषणं ॥ चलाचलविभागेनममस्यात्प्रतिमाद्वयं ॥ २१ ॥ चलातुप्रतिमाविप्राःशालग्रामादिका
चला ॥ मन्मुखंब्राह्मणाःसत्यमितिवेदेषुगीयते ॥ २२ ॥ मुखमेवहिलोकेस्मिन्प्रोच्यतेतृप्तिकारणम् ॥
पौर्णमास्याममायांवाद्वादश्यांवाविशेषतः ॥ २३ ॥ यद्दानंदीयतेतस्यफलंबहुगुणंभवेत् ॥ चातुर्मास्ये

विशेषेणदानंकुर्यात्तुभक्तितः ॥ २४ ॥ तस्याक्षयंफलंप्रोक्तंनात्रकार्याविचारणा ॥ रंगवल्यापद्मलक्षं
कुर्वतःफलमुच्यते ॥ २५ ॥ चत्वारिंशत्सहस्राणांप्रणामानांलभेत्फलं ॥ तथैवपुष्पलक्षस्यफ
लंप्रोक्तंमनीषिभिः ॥ २६ ॥ शतपत्रंतथाजातिर्मल्लिकामालतीतथा ॥ यूथिकादिसुगंधानांपुष्पाणांफल
मीदृशं ॥ २७ चंपकस्यभवेल्लक्षंनतिलक्षसमंफलं ॥ तुलसीनांतुलक्षस्यनतिलक्षाच्चतुर्गुणं ॥ २८ ॥
यथालक्ष्मीःप्रियामेस्यात्तथैवतुलसीप्रिया ॥ नतुलस्याःसमंकिंचित्त्रिषुलोकेषुवैमम ॥ २९ ॥ यातुलस्या
विहीनास्यात्पूजासानिष्फलाभवेत् ॥ अलाभेतुलसीनांचकाष्ठमप्यर्पयेत्तथा ॥ ३० ॥ प्रक्षालयित्वा
निर्माल्यमपिमामर्पयेत्तदा ॥ काष्ठाभावेतुकर्तव्यंतुलसीनामकीर्तनं ॥ ३१ ॥ चंदनेपिहिकुर्वीततुलसी
काष्ठघर्षणं ॥ कुंकुमाच्चापिकस्तूर्यामभप्रीतिकरंहितत् ॥ ३२ ॥ संध्यायावंदनेचापितर्पणादिकर्मसु ॥
दर्भाभावेतिलाभावेतुलस्येवफलप्रदा ॥ ३३ ॥ तुलसीकाष्ठसंदीपेवन्हौहोमंकरोतिचेत् ॥ फलंदशगु
णंप्रोक्तंप्रेतदाहेप्रयागवत् ॥ ३४ ॥ तुलसीवनसंसर्गोगंगास्नानसमःस्मृतः ॥ जपस्तुक्रियतेयावान्तुल
सीकाष्ठमालया ॥ ३५ ॥ फलंशतगुणंतस्यमन्मंत्राणांविशेषतः ॥ द्वादश्यांसंगमेचैवनष्टेंदौग्रहणेतथा
॥ ३६ ॥ भानुभार्गवभौमेषुव्यतिपातेचवैधृतौ ॥ संध्यायांचतथारात्रौउपानत्पादकोऽशुचिः ॥ ३७ ॥
नच्छिद्यात्तुलसीपत्रंछिंदन्नरकमाप्नुयात् ॥ निषिद्धेदिवसेप्राप्तेगृण्हीयाद्गलितंदलं ॥ ३८॥ तेनैवपूजांकुर्वी
तनपूजातुलसींविना ॥ अन्येषांपुष्पराशीनांसहस्रंविफलंभवेत् ॥ ३९ ॥ अवचीयस्वयंकुर्याल्लक्षपू

जादिकंबुधः ॥ सएवपूर्णलभतेफलंतुलसिपूजनात् ॥ ४० ॥ तुलस्यादिसुपुष्पैस्तुपरेणावचितैर्नरः ॥ अर्धंसफलमाप्नोतिक्रीतेनस्यात्सपादभाक् ॥ ४१ ॥ प्रत्येकंपुष्पमादायतुलसींवासमर्पयेत् ॥ प्रत्येकमूलमंत्रेणयुगपन्नार्पयेन्मम ॥ ४२ ॥ यावंतियुगपद्दद्यात्तावदेकमितीरितं ॥ सर्वभक्त्यैवकुर्वीतभक्तिर्हिनवृथाभवेत् ॥ ४३ ॥ इतितेकथितंदेविकिमन्यच्छ्रोतुमिच्छसि ॥ ४४ ॥ इतिश्रीवाराहपुराणेचातुर्मास्यमाहात्म्येद्वादशोऽध्यायः ॥ १२ ॥ ॥ धरण्युवाच ॥ ॥ कस्मैदानंनकर्तव्यंब्राह्मणायापितद्वद ॥ दानपात्रत्वहानिःस्याद्ब्राह्मणेकेनकर्मणा ॥ १ ॥ श्रीवराहउवाच ॥ ॥ यजनाध्ययनंदानंत्रीणिकर्माणिसर्वदा ॥ ब्राह्मणादिद्विजातीनांत्रयाणामीरितानिवै ॥ २ ॥ याजनाध्यपनेचैवतृतीयंतुप्रतिग्रहः जीविकार्थंत्रिकर्माणिब्राह्मणस्यस्मृतानिवै ॥ ३ ॥ युद्धेवैरिजयोवापिमरणंवानृपस्यतु ॥ जीविकाप्रोच्यतेदेविवैश्यानांकृषिकर्मणा ॥ ४ ॥ गोरक्षाचैववाणिज्यंशूद्रस्योत्तमसेवनं ॥ शिलोंछंप्रथमावृत्तिर्ब्राह्मणस्यप्रकीर्तिता ॥ ५ ॥ अयाचितंततोर्वाक्स्याद्याचितंवाततःपरं ॥ जपाध्ययनहोमानांनित्यादीनांचशुल्ककं ॥ ६ ॥ आपद्येतानिकार्याणिनपात्रत्वाद्विहीयते ॥ आपद्यपिप्रकुर्वाणःकृषिंचक्षेत्रकर्मवा ॥ ७ ॥ गोरक्षांवाथवाणिज्यंसोर्धपात्रमितीरितः ॥ अनापदितुयःकुर्याद्द्रव्यलोभेनविप्रकः ॥ ८ ॥ तुरीयांशेनपात्रत्वंतस्योक्तंवेदवादिभिः ॥ वेदाध्ययनसंस्कारोयदिस्यात्तर्हिपात्रता ॥ ९ ॥ अथवाज्ञानसंबंधात्पात्रत्वंपरिकीर्तितं ॥ एतद्विहीनोविप्रोयःशिलोंच्छोपिनपूज्यते ॥ १० ॥ नीचसेवा

रतोयस्तुवेदसंस्कारवर्जितः ॥ ज्ञानलेशविहीनस्तुनपात्रंब्राह्मणोभवेत् ॥ ११ ॥ ममद्वेषीतथैवस्याद्वेद
वेदांगपारगः ॥ हीनवृत्त्यापियोजीवन्निंद्यतांयातिसद्विजः ॥ १२ ॥ मद्भक्तस्तुयदैवस्याद्ब्राह्मणःपात्र
मेवसः ॥ यथासंन्यासग्रहणात्पूर्वंपापंनसंस्पृशेत् ॥ १३ तथैवजातवैराग्यंपूर्वपापंनसंस्पृशेत् ॥ ही
नवृत्त्यापियोजीवन्देवब्राह्मणपूजनं ॥ १४ ॥ स्वशक्त्यायस्तुकुर्वीतनसपापेनलिप्यते ॥ दिनेदिनेतुय
त्पापंक्रियतेजीविकार्थिना ॥ १५ ॥ तत्प्रसादाद्द्विविप्राणांदेवानांचापिहीयते ॥ अतस्तुसर्वदाकार्यं
चातुर्मास्येविशेषतः ॥ १६ ॥ पापाद्विमुक्तिकामेनदेवब्राह्मणतोषणं ॥ ब्राह्मणायस्यतुष्टाःस्युस्तस्यतु
ष्टोहरिःस्वयं १७ ॥ तद्द्वेष्टाचहरिद्वेष्टाभवेन्नात्रास्तिसंशयः ॥ इत्याहभगवान्ब्रह्मानारदायपुरास्वयम्
॥ १८ ॥ गतश्रीर्गणकान्द्वेष्टिगतायुश्चचिकित्सकं ॥ गतश्रीश्चगतायुश्चब्राह्मणान्द्वेष्टिनारद ॥ १९॥
आततायिनमप्येवस्याद्वधार्होब्राह्मणःक्वचित् ॥ मूर्खोवापतितोवापिकिंपुनर्वेदपारगः ॥ २० ॥ वपनं
द्रविणादानंस्थानान्निर्यापणंतथा ॥ एषाहिब्रह्मबंधूनांवधोनान्योस्तिदैहिकः ॥ २१ ॥ गुरुंहुंकृत्यम
नसाविप्रंनिर्जित्यवादतः ॥ अरण्येनिर्जलेदेशेसभवेद्ब्रह्मराक्षसः ॥ २२ ॥ मद्द्वेषिणंपराजित्यनवादे
स्यात्तुदोषभाक् ॥ मद्द्वेषिणंगुरुमपिवादेजित्वानदोषभाक् ॥ २३ ॥ पुण्यमेवभवेन्नाघंमदुपासनसं
भवं ॥ प्रकाशयतिलोकेमांयोविद्वान्पुरुषोत्तमं ॥ २४ ॥ अजस्यापिपितामेस्यात्सपुमानितिहिश्रुतिः॥
नतत्समोहिलोकेस्मिन्मत्प्रियोनात्रसंशयः ॥ २५ ॥ सलभेच्छाश्वतान्लोकान्मोदमानोमयासह ॥

मद्रूपसदृशाकारःशंखचक्रगदाधरः ॥ २६ ॥ सुहृद्भिर्मोदतेनित्यंपुनरावर्ततेनसः ॥ पुनःपुनर्जायमानं
सृष्टिसंहारपर्ययं ॥ २७॥ सोविद्यामुक्तदेहोयःसदापश्यतिमत्कृतं ॥ जगत्सृष्ट्यादिकार्याणिश्रीसंगादी
निकानिचित् ॥ २८ ॥ वर्जयित्वासर्वभोगसामर्थ्यानिभवंतिहि ॥ स्वस्यानर्हेषुकार्येषुनैवेच्छातस्यजा
यते ॥ २९ ॥ ममैवेच्छानुसारेणतस्येच्छाससुखोततः ॥ नित्यंभवेन्नतस्यास्तिपुनरज्ञानसंभवः
॥ ३० ॥ वेदाध्यायेधिकारीयःक्षत्रियोवैश्यकोपिवा ॥ त्रैवर्णिकाःस्त्रियोपिस्युर्मोक्षमार्गाधिकारिणः
॥ ३१ ॥ लभतेस्वस्वरूपेणमुक्तिज्ञानानुसारतः ॥ वेदाधिकारीयोनस्यान्ममभक्तस्तुयोभवेत् ॥ ३२ ॥
वेदाधिकारिदेहंसलब्ध्वामुक्तिमथाप्नुयात् ॥ वर्णीवर्णाधमोवापिज्ञानीवाप्यज्ञएववा ॥ ३३ ॥
वेदाध्याय्यथवामूर्खोयःपुमान्धनवान्भवेत् ॥ स्वशक्त्यातेनकर्तव्यंदेवब्राह्मणतोषणं ॥ ३४ ॥
यथाहिस्कंधशाखानांतरोर्मूलावसेचनात् ॥ भवेत्तृप्तिस्तथादेवाःसर्वेमत्तुष्टितुष्टया ॥ ३५ ॥ मन्मुखं
तुभवेद्विप्रस्ततस्तत्तृप्तितोप्यहं ॥ तुष्टोभवामिनैवात्रसंदेहस्तवजायतां ॥ ३६ ॥ यद्यद्विजातयेदद्याद
न्नवासोधनादिकं ॥ मांनिवेद्यैवयोदद्यात्फलंपूर्णभवेत्ततः ॥ ३७ ॥ यद्यदिष्टतमंलोकेयच्चापिप्रियमात्म
नः ॥ तत्तन्निवेदयेन्मह्यंतदानंत्यायकल्पते ॥ ३८ ॥ शालग्रामशिलायांवैसदामत्सन्निधिर्भवेत् ॥ अत
स्तस्मैनिवेद्यैवदद्याद्भुंजीतवैस्वयं ॥ ३९ ॥ मह्यंनिवेदितान्नेनयष्टव्यंदेवतांतरं ॥ पितृभ्यश्चापितद्देयंत
दानंत्यायकल्पते ॥ ४० ॥ पितृशेषंदेवशेषंयोदद्यान्मूढधीर्मम ॥ रेतोदाःपितरस्तस्यदेवाःस्युःकुपिता

अपि ॥ ४१ ॥ तद्दत्तंनैवगृह्णंतिविमुखास्तुभवंतिहि ॥ तस्मान्निवेद्यभक्त्यान्नंकुर्याद्विप्रादितोषणं ॥ ४२ ॥
इतितेगुह्यमाख्यातंमयाप्रीत्यातवानघे ॥ नाख्येयंभक्तिहीनायकिमन्यच्छ्रोतुमिच्छसि ॥ ४३ ॥ इति
श्रीवाराहपुराणेचातुर्मास्यमाहात्म्येत्रयोदशोऽध्यायः ॥ १३ ॥ ॥ धरण्युवाच ॥ ॥ कथंसृजसिभूता
निकथंवासंहरिष्यासि ॥ केचतेशाश्वतालोकायत्रस्थाःप्रलयेपिच ॥ १ ॥ नोपद्रुताभविष्यंतिकुत्रतेसं
तिवाप्रभो ॥ इतिमेकृपयाब्रूहिनाहंतृप्यामिशृण्वती ॥ २ ॥ ॥ श्रीवराहउवाच ॥ ॥ पूर्वंब्रह्मल
येजातेनकिंचिदवशिष्यते ॥ तत्त्वानिप्रकृतिंयांतिजीवाःसुप्ताभवंतिहि ॥ ३ ॥ नजानंतिसुखंदुःखंत
दाहंरमयासह ॥ अप्राकृतेजलेदेविक्रीडांस्तिष्ठामिलीलया ॥ ४ ॥ लयस्यसमयंप्राहुर्ब्रह्मायुःसंमितंबु
धाः ॥ यदातस्याष्टमोभागःशिष्यतेतुतदामम ॥ ५ ॥ सिसृक्षाजायतेतत्रसृष्टिस्तुत्रिविधामता ॥ आत्मसृ
ष्टिर्जीवसृष्टिःप्रकृतेःसृष्टिरेवच ॥ ६ ॥ प्रादुर्भावोवताराणांममसृष्टिरितीरिता ॥ तत्तत्कर्मानुसारेणजीवानां
देहयोगतः ॥ ७ ॥ जीवसृष्टिरियंप्रोक्तासैवमिश्रेतिकीर्तिता ॥ प्रकृतेस्तत्त्वसृष्टिःस्यादितिसृष्टित्रयंस्मृतं
॥ ८ ॥ अहंनारायणःपूर्वंदेविस्वंघृणिसंज्ञका ॥ मत्तश्चत्वारिरूपाणिप्रादुर्भूतानिवैतदा ॥ ९ ॥ दे
व्याअपिभवंतिस्मचतस्रोमूर्तयस्तदा ॥ वासुदेवस्यमायाभूज्जयासंकर्षणस्यच ॥ १० ॥ प्रद्युम्नस्य
कृतिःशांतिरनिरुद्धस्यचाभवत् ॥ ततोनानावताराणांसहस्रंवासुदेवतः ॥ ११ ॥ जज्ञेतथैवमायाया
आसीद्रूपसहस्रकं ॥ नानारूपैरहंचैवक्रीडमानस्तयासह ॥ १२ ॥ अत्यक्रामत्सलोकोवैयःशिष्टः

प्रलयादभूत् ॥ तदामदाज्ञयादेवीब्रह्मादीन्स्रष्टुमिच्छती ॥ १३ ॥ प्रकृतिंबोधयामासस्वयंवैत्रिगुणा
त्मिकां ॥ महत्तत्त्वमहंकारंमनोबुद्धींद्रियाणिच ॥ १४ ॥ मात्राश्चैवतुतत्रादौब्रह्माणंमहतोसृजत् ॥
मायायांवासुदेवात्सनाम्नापुरुषइत्यपि ॥ १५ ॥ बभूवसृष्टिकालादावाद्यब्रह्माततस्तुसः ॥ जयायाम
सृजत्सूत्रंतथासंकर्षणादपि ॥ १६ ॥ प्राणात्मनाजगत्सर्वंयेनेदंधार्यतेसदा ॥ प्रद्युम्नाच्चकृतौजज्ञेकन्या
नांचचतुष्टयं ॥ १७ ॥ गायत्रीचैवसावित्रीश्रद्धाचैवसरस्वती ॥ श्रद्धासूत्रस्यभार्याभूत्तिस्रस्तुपु
रुषस्त्रियः ॥ १८ ॥ गायत्र्यांपुरुषाज्जातावाग्देवीब्रह्मणासह ॥ ताभ्यांतुजज्ञतुःपुत्रौरुद्रानंता
भिधावुभौ ॥ १९ ॥ अनंतादुग्रतामासीद्रुद्रएवद्वितीयकः ॥ सावित्र्यांपुरुषाज्जज्ञेस्वयंप्राणोऽखि
लस्यच ॥ २० ॥ प्राणादप्यभवद्रुद्रस्तृतीयंरूपमाश्रितः ॥ वैकारिकोब्रह्मजस्तुतैजसःप्राणजो
ह्यसौ ॥ २१ ॥ तामसोनंततोजातस्त्रिरूपोरुद्रईरितः ॥ पुरुषाच्चसरस्वत्यांजज्ञेजीवाभिधस्ततः
॥ २२ ॥ जज्ञेचात्रिविधाबुद्धिस्तिस्रस्तारुद्रभार्यकाः ॥ ततोरुद्रास्त्रिरूपोसौसृष्टवान्सर्वदेवताः ॥ २३ ॥
अहंकारात्मकात्तस्मात्तत्त्वान्यपिचजज्ञिरे ॥ श्रद्धायांसूत्रतोजज्ञेकालःसर्वाश्चदेवताः ॥ २४ ॥ वाजपे
याश्वमेधाद्याःसर्वेयज्ञगणाअपि ॥ एवंपूर्वमभूत्सृष्टिःसूक्ष्मैरूपैस्ततःपरं ॥ २५ ॥ पुनर्देवगणाह्येतेस्थूल
देहानभीप्सवः ॥ प्रद्युम्नंविविशुःसर्वेस्वैस्वैरंशैर्ममाज्ञया ॥ २६ ॥ प्रद्युम्नादनिरुद्धस्तुतान्सर्वान्स्व
यमाददे ॥ शांत्यांसनिदधेपश्चात्ततोब्रह्माजनिस्वयम् ॥ २७ ॥ त्रिगुणात्मात्रिरूपोपिजज्ञेरुद्रःसत्रुद्धि

कः ॥ शेषश्चापितत्तोजज्ञेशयनंममसोभवत् ॥ २८ ॥ प्राणश्चाप्यथवाग्देवीद्वितीयाचसरस्वती ॥
तयोरेवतुतत्पत्न्यौअभूतांब्रह्मणस्ततः ॥ २९ ॥ प्राणात्तुगरुडश्चासीत्सवाहनमभून्मम ॥ ततोरुद्राद
भूत्सृष्टिर्देवानांपूर्वसृष्टिवत् ॥ ३० ॥ मायायांजज्ञिरेपश्चाद्ब्रह्मविष्णुमहेश्वराः ॥ श्रीभूदुर्गाइतित्रीणिरमा
रूपाणिचाभवन् ॥ ३१ ॥ ततश्चविष्णुसंयोगात्परार्धांतेहिरण्मयं ॥ सलिलेंडमभूद्देवियत्रेदंसर्वमाहितं
॥ ३२ ॥ सर्वैब्रह्मांडकल्पोभूत्ततोदेवैःसहाच्युतः ॥ प्रविश्यशिश्येसलिलेब्रह्मांडांतःश्रियान्वितः ॥ ३३ ॥
निधायसर्वदेवांशान्जीवसंघांस्तथोदरे ॥ कल्पपूर्तिर्भवेद्यावत्तावत्ससलिलेशयः ॥ ३४ ॥ ततःपद्मम
भून्नाभेःपद्मकल्पस्तुसोभवत् ॥ ततोब्रह्माभवत्सोपिद्वितीयमनवेक्ष्यतु ॥ ३५ ॥ भयभीतोस्मरद्विष्णुंत
पस्तपतपेतिच ॥ वाचंश्रुत्वादिव्यवर्षसहस्रंसोऽतपत्तपः ३६ ततआकाशमसृजत्ततोवायुरजायत ॥ ततो
वन्हिरभूद्दिव्यःशोषमापततोजलं ॥ ३७ ॥ ब्रह्मांडार्धमभूच्छुष्कंततोलोकत्रयंमम ॥ श्वेतद्वीपंतथानं
तासनंवैकुंठमेवच ॥ ३८ ॥ जलविप्लवहीनंचतथानित्यंततोखिलं ॥ तामिस्रंचांधतामिस्रंतथानिरय
पंचकं ॥ ३९ ॥ अभूद्द्वयक्तंममद्वेष्याःपीडचंतेयत्रसंतत ॥ ततोर्धसलिलेतस्मिन्नभूत्पृथ्वीबिलैःसह ॥ ४० ॥
पृथिव्याउच्चतांप्राहुर्दशयोजनकोटयः ॥ ततोधस्तात्तुसलिलंदशपंचचकोटयः ॥ ४१ ॥ भूलोकादध
रंप्रोक्तमतलंप्रथमंबिलं ॥ कोटिद्वयेयोजनानांनानाभोगैःसमाकुलं ॥ ४२ ॥ कोटचांकोटचांयोजनानां
बिलषट्कमुदीरितं ॥ वितलंसुतलंचैवचतुर्थंतुतलातलं ॥ ४३ ॥ रसातलंचवितलंपातालंसप्तमंबिलं ॥

बिलसप्तकविस्तारोयावद्ब्रह्मांडखर्परं ॥ ४४ ॥ कोटियोजनतोधस्तात्पातालान्नरकाःस्मृताः ॥ योजनानांतुलक्षाणिद्वादशद्वादशैवतु ॥ ४५ ॥ अंतरंनरकाणांस्यात्सप्तानांचपरस्परं ॥ रौरवःप्रथमःप्रोक्तोमहारौरवएवच ॥ ४६ कुंभीपाकोसिपत्राख्यःपूयशोणितमुद्गरः ॥ तप्तवालुकइत्येतेसप्तैवनरकाःस्मृताः ॥ ४७ पृथ्वीनाशात्प्रणश्यंतितदुत्पत्तौभवंतिच ॥ तत्रस्थाःपापिनोयेतुप्रलयेमरनाभितः ॥ ४८ ॥ तिष्ठंत्यधस्तात्तुपुनःसृष्टौगच्छंतितत्रहि ॥ ततःषोडशलक्षाणिभूकंदःपरिकीर्तितः ॥ ४९ ॥ चतुर्दशबिलान्येवेदशसाहस्रयोजनः ॥ प्रत्येकमवकाशःस्यात्तेषुसर्वेषुसर्वतः ॥ ५० ॥ आब्रह्मांडकटाहंस्याद्विस्तारोपिबिलेबिले ॥ भूमंडलस्यविस्तारःपंचाशत्कोटियोजनः ॥ ५१ ॥ ब्रह्मांडस्यायमेवस्याद्गर्भोदशदिशासुच ॥ जंबुद्वीपस्तुभूमध्येलक्षयोजनविस्तृतः ॥ ५२ ॥ तस्यापिमध्येसौवर्णोभासतेमेरुपर्वतः ॥ मेरुमध्याद्योजनानिपंचविंशतिकोटयः ॥ ५३ ॥ दशादिक्षुविजानीयादाब्रह्मांडकटाहकं पंचाशत्तुसहस्राणियोजनानिभवेदिह ॥ ५४ ॥ मेरुमध्यात्क्षारसिंधुर्लक्षयोजनविस्तृतः ॥ लक्षद्वयमितस्तस्माल्लक्षद्वीपोभिधीयते ॥ ५५ ॥ इक्षुद्रवसमुद्रेणतन्मितेनसआवृतः ॥ चतुर्लक्षंयोजनानांशाल्मलद्वीपविस्तृतिः ॥ ५६॥ तावन्मितःसुरासिंधुर्वृतोयंद्विगुणस्ततः ॥ कुशद्वीपस्तन्मितेनवृतपाथोधिनावृतः ॥ ५७ ॥ ततःषोडशलक्षाणिक्रौंचद्वीपस्यविस्तृतिः ॥ तावन्मितेनैवपुनर्दधिवारिधिनावृतः ॥ ५८ ॥ द्वात्रिंशल्लक्षसंख्याकाशाकद्वीपस्यविस्तृतिः ॥ क्षीरवारिधिनासोपिवृतस्तावन्मितेनवा ॥ ५९ ॥

तन्मध्येममलोकस्तुपरितोवलयाकृतिः ॥ योजनानांतुलक्षाणिविंशतिस्तस्यविस्तृतिः ॥ ६० ॥ श्वेतद्वी
पइतिख्यातःप्रलयेपिननश्यति श्रीभूदुर्गात्मकाभागास्तत्रद्वीपेभवंतिहि ॥ ६१ ॥ तत्रचास्तिभूमिभागो
योजनानांषडेवतु ॥ लक्षाणितुततोमध्येश्रीभागोमुक्तसेवितः ॥ ६२ ॥ अष्टयोजनलक्षाणिविस्तृ
तिस्तस्यकीर्तिता ॥ पंचाशल्लक्षमेकंचतदुर्ध्वंस्वर्गमानतः ॥ ६३ ॥ ततोपिपरतःप्रोक्तोदुर्गाभागः
षडेवतु ॥ योजनानांतुलक्षाणिपरतःक्षीरसागरः ॥ ६४ ॥ लक्षयोजनषट्केनविस्तारस्तस्यकीर्तितः ॥
शाकद्वीपात्तुभूभागस्तावन्मितइतीरितः ॥ ६५ ॥ भूदुर्गाभागयोःप्रोक्तमुच्चत्वंभूमिपृष्ठतः ॥ द्विसप्तति
सहस्राणिसर्गेसर्गेचजायते ॥ ६६ ॥ भूमिनाशेतयोर्नाशस्तदुत्पत्तौतदुद्भवः ॥ येतुमुक्तिंवनप्राप्तान
क्ताःपुण्यकर्मिणः ॥ ६७ ॥ तिष्ठंतितत्रतेसर्वेयावत्स्याद्ब्रह्मणोलयः ॥ तस्मिन्स्थानेक्षयंप्राप्तेप्रविशंत्यु
दरेमम ॥ ६८ ॥ प्रसुप्तास्तत्रतिष्ठंतियावत्सृष्टिःपुनर्भवेत् ॥ श्रीभागेसंस्थितायेतुनतेषांप्रलयेभयं
॥ ६९ ॥ शाश्वतःसतुलोकोमेननश्येद्ब्रह्मणोलये ॥ मुक्ताएवतुनांतत्रवीक्षंतेसर्वदैवतु ॥ ७० ॥ सेवं
तेऽनंतरूपैश्चबहुरूपधरंहिमां ॥ क्षीराब्धेःपरतोद्वीपंसर्वतःपुष्कराभिधं ॥ ७१ ॥ कल्पांतप्रभवोवन्हि
र्जलंवाभूमिदुर्गगौ ॥ भागौनस्पृशतेतौहिचक्रेणपरिरक्षितौ ॥ ७२ ॥ तत्रस्थास्तुजनाःसर्वेमोदंतेसर्व
दैवतु ॥ कल्पांतप्रभवांबाधांनतेजानंतिजातुचित् ॥ ७३ ॥ श्वेतद्वीपादधस्तात्तुपृथ्वीतिष्ठतिपीठव
त् ॥ सृष्टौस्पृशातितद्वीपंप्रलयेतुवियुज्यते ॥ ७४ ॥ ममशक्त्यैवमद्वीपःसदातिष्ठतिशाश्वतः ॥ भूमि

श्रीभागयोर्मध्येलक्षयोजनविस्तृतः ॥ ७५ ॥ आरनामासुधांभोधिर्मुक्तामुक्तनिषेवितः ॥ अर्धतस्यतुभू
भागःश्रीभागश्चार्धमेवच ॥ ७६ ॥ लक्षयोजनमध्येतुद्वीपाकारोस्तितत्तटः ॥ दशयोजनसाहस्त्रंवि
स्तृतिस्तस्यकीर्तिता ॥७७॥ अर्धनाशोभवेत्तस्यप्रलयेपिपुनःपुनः ॥ अर्धभागस्तुमुक्तानांक्रीडास्थानंनपश्य
ति ॥ ७८ ॥ दुर्गाश्रीभागयोर्मध्येरनामामृतसागरः ॥ तस्याप्येवंविस्तृतिस्तुनित्यानित्यत्रिभेदतः ॥७९ ॥
अरण्याख्यौसुधांसिधूममलोकत्रयेपिच ॥ वर्ततेममभक्तानांक्रीडायैसर्वकामदौ ॥ ८० ॥ पंचाशत्तुसह
स्त्राणियोजनानांगभीरता ॥ उभयोस्तुतदाप्रोक्ताश्वेतद्वीपांतरस्थयोः ॥ ८१ ॥ श्वेतद्वीपेचतुर्दिक्षुचतस्त्रो
ममर्मूर्तयः ॥ पूज्यंतेदैवतैःसर्वैर्वासुदेवादिकाःसदा ॥ ८२ ॥ आतिस्वच्छतयात्यंषनरोधंचंद्रसूर्ययोः ॥
विधत्तेतत्प्रभावाणांशुद्धसत्वात्मकोयतः ॥ ८३ ॥ क्षीराब्धेरुपरिष्टात्तुश्वेतद्वीपादधस्तथा ॥ मार्गाद्वादश
तिष्टंतिपरस्ताद्गमनायवै ॥ ८४ ॥ द्वाराण्यष्टौचतुर्दिक्षुचत्वार्येवविदिक्षुच ॥ योजनानिसहस्त्रंतुत्रि
स्तारोस्तितथोच्चता ॥ ८५ ॥ अयुतंयोजनानांतुद्वारेषुद्वादशस्वपि ॥ नवांधकारस्तत्रास्तिमहामाणेमरी
चिभिः ॥ ८६ ॥ कुट्टिमैर्घट्टितामार्गा सर्वेपिक्षीरवारिधौ ॥ तैरेवमार्गैर्गच्छंतिजनाःसर्वेचपुष्कं ॥ ८७ ॥
तमोवास्वर्णभूमिंवाऽनंतासनमथापिवा ॥ योगीतावन्नमुक्तःस्याद्यावच्छ्वेतंनपश्यति ॥ ८८ ॥
श्वेतद्वीपंतुदृष्ट्वैववैकुंठादौप्रमोदते ॥ नानाभोगसमाकीर्णंश्वेतद्वीपमिदंमम ॥ ८९ ॥ स्थानंप्रियतमंदे
वि त्रिषुधामसुमेसदा ॥ श्वेतद्वीपसमीपेतुक्षीराब्धौशेषमंचकं ॥ ९० ॥ चातुर्मास्येनुसंप्राप्तेस्त्रपामिप्राति

वत्सरं ॥ श्वेतद्वीपस्थिताःसर्वेयेचान्यत्रापिवर्तिनः ॥ ९१ ॥ मद्भक्तादेवताःसर्वास्तत्रस्थंपूजयंतिहि ॥
श्रीभूदुर्गाख्मिकालक्ष्मीस्त्रिभीरूपैःसदैवतु ॥ ९२ ॥ सेवंतेनंतरूपैश्चबहुरूपधरंहिमां ॥ क्षीराब्धेःपरतो
द्वीपंसर्वतःपुष्कराभिधं ॥ ९३ ॥ योजनानांचतुःषष्टिर्लक्षाण्यस्यतुविस्तृतिः ॥ तावन्मितेनशुद्धोदसाग
रेणाभिवेष्टितं ॥९४॥ लक्षंषण्णवतिर्हैमीयोजनानांततःक्षितिः ॥ दशयोजनलक्षंतुप्रांतयोरुभयोरपि॥९५॥
नानावर्णैर्महारत्नैःखचिताभूमिरद्भुता ॥ मध्येकेवलसौवर्णीसौवर्णैस्तरुभिर्वृता ॥ ९६ ॥ मनोहराभिः
स्त्रीभिश्चविद्युद्भिरिवसंकुला ॥ रत्नसोपानकाभिश्चवापीभिश्चापिसंयुता ॥ ९७ ॥ कृतपुण्याजनास्तत्र
सर्वभोगसमन्विताः ॥ मोदंतेपुण्यपुंजेनयावद्भोगोहिजायते ॥ ९८ ॥ स्वर्गतुल्याहिसाभूमिःसिद्धगंधर्व
सेविता ॥ पंचायुतविहीनंतुसार्धकोटित्रयंत्विदं ॥ ९९ ॥ योजनानांमेरुमध्याद्गणनापरिकीर्तिता ॥
अयंतुपरितोदिक्षुलोकइत्यभिधीयते ॥ १०० ॥ सूर्यलोकोयतोत्रास्तिपरतःसनदृश्यते ॥ अलोकइत्यतः
प्रोक्तोभूभागःपरतोबुधैः॥ १ ॥ अलोकलोकयोर्मध्येलोकालोकाचलोमहान् ॥ लक्षद्वयंयोजनानामुन्नतात
स्यकीर्तिता ॥ २ अधित्यकातुतस्यास्तियोजनायुतपंचकं ॥ योजनानांतुलक्षाणांपंचाशत्तस्यविस्तृतिः
॥ ३ ॥ लोकभागेल्पपुण्यास्तुकिंचिद्भोगसमन्विताः ॥ अलोकभागेपापिष्ठास्तिष्ठंतिस्वल्पया
तनाः ॥ ४ ॥ पापक्षयेपुनर्यांतिकर्मशेषेणसंसृतिं ॥ लोकालोकाधित्यकायामष्टादिक्षुसमंततः ॥ ५ ॥
विलद्वादशकंचास्तिगंतुंपातालसप्तकं ॥ नरकाणांसप्तकंचनेतुंपापजनानपि ॥ ६ ॥ आयामोविस्त

रश्चैषांसहस्रंयोजनानितु ॥ लोकालोकात्परस्ताच्चलोकात्तुद्विगुणंतमः ॥ ७ ॥ लक्षद्वयंयोजनानामुच्च
तातस्यकीर्तिता ॥ तत्रगत्वातुदुष्टानांनहिसंसारदर्शनं ॥ ८ ॥ दुःखस्यैवसदाभोगस्तत्रस्थानांनसंशयः
॥ सदेशःशाश्वतःप्रोक्तोभूनाशेपिननश्यति ९ पठतांनस्यभजतेसर्गेसर्गेवसुंधरा ॥ ऊर्ध्वेभागस्तुतमसः
पंचभिर्नरकैर्वृतः ॥ १० ॥ रौरवोथमहांश्चैवकुंभीपाकोसिपत्रकः ॥ पूयशोणितनामापिपंचमःपरिकी
र्तितः ॥ ११ ॥ ऊर्ध्वभागस्यतमसोगणनालक्षयोजना ॥ पंचानांनरकाणांतुप्रोक्तासैवोर्ध्वतावुधैः ॥
॥ १२ ॥ विस्तारोरौरवस्यास्तियोजनानांद्विकोटिकः ॥ महारौरवकस्यापितावत्येवतुविस्तृतिः ॥ १३ ॥
प्रत्येकंकोटिरेकैकाकुंभीपाकासिपत्रयोः ॥ कोटिर्लक्षविहीनातुपूयशोणितविस्तृतिः ॥ १४ ॥ पंचाशत्तु
सहस्राणितामिस्रस्योच्चतामम ॥ मध्यभागस्तुतमसःसएवपरिकीर्तितः ॥ १५ ॥ अधस्तादंधतामिस्रो
महादुःखप्रदोसतां ॥ योजनानांतुपंचाशत्सहस्राणितदुच्चता ॥ १६ ॥ तामिस्रश्चांधतामिस्रोह्यतिक
ष्टाविमौस्मृतौ ॥ ज्ञानेंद्रियैःपंचभिश्चदुःखमेवानुभूयते ॥ १७ यतस्तत्रसुपापिष्ठैःपुनरावृत्तिवर्जितैः ॥
मद्द्वेषिणांतुसततंमद्भक्तद्वेषिणांसदा ॥ १८ ॥ द्वेष्टारोमत्प्रणामानांतेषांस्थानंतमःस्मृतं ॥ अनादित्वा
दिदंप्रोक्तंतमोऽनारंभणंश्रुतौ ॥ १९ ॥ गंतुंवारयतिस्वस्थंतेनेदंवृतमित्यपि ॥ तमसोद्विगुणंदोत्रविद्य
तेचघनोदकं ॥ २० ॥ यत्रद्वीपसहस्राणिनानाभोगान्वितानिच ॥ निषेवितानिदेवैश्चप्राप्यंतेपुण्यक
र्मभिः ॥ २१ ॥ सौवर्णैरत्नखचितैर्नानाद्वीपतटैरिह ॥ नैवांधकारलेशोपिकदाचित्तत्रदृश्यते ॥ २२ ॥

तस्यपारेममस्थानमनंतासननामकं ॥ यावदंडकटाहंतुपरितोवलयाकृति ॥ २३ लक्षत्रयंयोजनानांविस्तारस्तस्यकीर्तितः ॥ चतुर्दिक्षुचतत्रापिवासुदेवादिमूर्तयः ॥ २४ ॥ पूज्यंतेदैवतैःसर्वैर्मुक्तामुक्तैश्च सर्वदा ॥ श्रीभूदुर्गात्मिकाभागाःप्रत्येकंलक्षयोजनाः ॥ २५ ॥ विद्यंतेतत्रप्रथमोभूभागःपरिकोर्तितः ॥ श्रीभागोमध्यमःप्रोक्तोदुर्गाभागःपरःस्मृतः ॥ २६ ॥ अरनामासुधांभोधिस्तत्तटोमध्यभागतः ॥ सहस्रद्वयविस्तारोमुक्तामुक्तनिषेवितः ॥ २७ ॥ श्रीदुर्गाभागयोर्मध्येरनामामृतसागरः ॥ तथैवविद्यतेदेविमुक्तामुक्तनिषेवितः ॥ २८ ॥ अयुतंयोजनानांतुतयोस्तत्रगभीरता ॥ लक्षोच्छ्रितस्तुभूभागाद्द्वौभागावयुतोच्छ्रितौ ॥ २९ ॥ भूनाशेतुद्वयोर्नाशःश्रीभागोनैवनश्यति ॥ तत्रस्थाःपुण्यकर्माणःसंतिष्ठंतेममोदरे ॥ ३० ॥ मुक्तास्तत्रैवमोदंतेश्रीभागेशाश्वताखिलाः ॥ नतेषांपुनरावृत्तिःकदाचिदपिजायते ॥ ३१ ॥ श्रीभागेपृथिवीयातिसर्गेसर्गेतुपीठतां ॥ श्वेतद्वीपवदन्यत्रविज्ञेयंरचनादिकं ॥ ३२ ॥ सर्वेषांतुसमुद्राणांगांभीर्यंविस्तृतेसमं ॥ घनोदकस्यतत्प्रोक्तंगांभीर्यंकोटियोजने ॥ ३३ ॥ इतितेकथितादेविसृष्टिर्ब्रह्मपुरःसरा ॥ क्षितिसृष्ट्यादिकंसर्वंतथास्थानद्वयंमम ॥ ३४ ॥ इतिश्रीवा०पु०चा० मा० धरणिवराहसंवादेसृष्टिरचनावर्णनंनामचतुर्दशोऽध्यायः ॥ १४ ॥ ॥ श्रीवराहउवाच ॥ ॥ अथातःसंप्रवक्ष्यामिरचनामौर्ध्वलौकिकीं ॥ भागद्वयंपुराप्रोक्तंलोकालोकप्रभेदतः ॥ १ ॥ तत्रलोकादूर्ध्वभागेद्विषड्योजनमात्रतः ॥ मेघलोकोभवेत्पश्चाद्गंधर्वाणांस्थितिर्भवेत् ॥ २ ॥ षष्टियोजनसाहस्रं

न्यूनंद्वादशयोजनेः ॥ गंधर्वाणांमनुष्याणांसलोकःपरिकीर्तितः ॥ ३ ॥ चत्वारिंशत्सहस्राणियोजना
नितंतःपरं ॥ देवगंधर्वलोकोवैभुवर्लोकोयमीरितः ॥ ४ ॥ कोटियोजनविस्तारोभूर्लोकाल्लक्षयोजने ॥
ईशितुर्लोकभागेस्मिन्परितोलोकपालकाः ॥ ५ ॥ अष्टौतिष्ठंतितल्लोकाःसंस्थानानिनिशामय ॥ इंद्र
स्तुपूर्वभागेस्तितल्लोकोलक्षयोजनः ॥ ६ ॥ पूर्वदक्षिणकोणेतुवह्निलोकस्थितिर्भवेत् ॥ यमस्तुद
क्षिणेभागेलोकपालोवसत्यहो ॥ ७ ॥ षडशीतिसहस्राणितल्लोकस्यामितिःस्मृता ॥ ततऊर्ध्वंचलोको
न्योयोजनानिचतुर्दश ॥ ८ ॥ यमदूतैर्महाक्रूरैःशतकोटिभिरावृतः ॥ ततआगत्यतेदूताभूलोकेनरके
षुच ॥ ९ ॥ सर्वेष्वपिवसंत्येतेसर्वकर्मसुसाक्षिणः ॥ मनोगतंचसर्वेषांपुण्यंवापापमेववा ॥ १० ॥ मृत्युका
लंपापभोगंपुण्यभोगमथापिवा ॥ सर्वंदैवविजानंतियमस्यैवप्रसादतः ॥ ११ ॥ नानायोनीःप्रापयंति
जीवानांनरकानपि ॥ आज्ञयायमदेवस्यसावधानाश्चसर्वदा ॥ १२ ॥ ऊर्ध्वलोकेष्वपिशतंकोटयोयम
दूतकाः ॥ तिष्ठंतिप्रापयंत्येतेनरान्पुण्यकृतःसदा ॥ १३ ॥ तत्तत्कर्मार्जितंलोकंयमस्यैवाज्ञयाततः ॥
पुण्यक्षयेपातयंतिभूमिलोकादिषूद्यताः ॥ १४ ॥ याम्यपश्चिमयोर्मध्येकोणेतुनिर्ऋतिःस्थितः ॥ पश्चि
मेवरुणोदेवस्तत्कोणेवायुरेवच ॥ १५ ॥ धनेशोनिधिभिःसार्धमुत्तरस्यांदिशिस्थितः ॥ इशाननामकोरु
द्रस्तत्कोणेचस्थितोभवत् ॥ १६ ॥ द्वादशायोजनादूर्ध्वंयावल्लक्षंसमाप्यते ॥ अष्टानामपिलोकाःस्यु
रूर्ध्वमूर्ध्वपुराणिच ॥ १७ ॥ नानोद्यानैश्चतेरम्याःकपित्थबीजवत्स्थिताः ॥ कर्माधाराऊर्ध्वलोकाभूम्या

धाराविवर्जिताः ॥ १८॥ ऊर्ध्वंमूर्ध्वंतुतिष्ठंतिव्याप्यब्रह्मांडकोटरं ॥ भुवर्लोकात्स्वर्गलोकःपंचाशल्लक्षयो
जनः ॥ १९॥ सूर्यचंद्रग्रहादीनांनक्षत्राणांध्रुवस्यच ॥ चतुर्दशानांलक्षाणांमध्येलोकाभवंतिहि ॥२०॥
यावद्ब्रह्मकटाहंतुनानाभोगसमन्विताः ॥ ततऊर्ध्वंतुमरुतांतथागणपतेरपि ॥ २१ ॥ नासत्यदस्रयोश्चा
पिषट्त्रिंशल्लक्षयोजनः ॥ यावदंडकटाहंतेऊर्ध्वंमूर्ध्वंभवंतिहि ॥ २२ ॥ अजानजानांदेवानांगंधर्वाणां
तथैवच ॥ पित्रादीनांचसर्वेषांलोकास्तत्रैवकल्पिताः ॥ २३ ॥ तेषामुपरिसर्वेषांपुरींद्रस्यामरावती ॥
कोटियोजनविस्तारानानाभोगसमन्विता ॥ २४ ॥ तत्रसिंहासनस्थंतुदेवाइंद्रमुपासते ॥ नानारूपधरा
देवानानाभोगेषुसंस्थिताः ॥ २५ ॥ पंचसप्ततिलक्षाणियोजनानिततोपिते ॥ उपरिष्टात्स्वर्गलोकाना
नानगरभूषिताः ॥ २६ ॥ कुबेरयमवायूनामग्न्यादीनांगवामपि ॥ सुराणांकामधेनोश्चलोकास्तत्रापिसं
स्थिताः ॥ २७ ॥ ततःपरंमहर्लोकःसपादकोटियोजनः ॥ तत्रापींद्रःप्रभुर्देवैःसेव्यतेसर्वदैवहि ॥२८॥
प्रद्युम्नश्चानिरुद्धश्चनारदाद्यामहर्षयः ॥ तिष्ठंतितत्रसततंध्यायंतोहृदिमत्तनुं ॥ २९ ॥ कोटिद्वयंचपादोनं
महर्लोकाज्जनःस्मृतः ॥ आधिपत्यंचरुद्रस्यतत्रलोकेप्रकीर्तितम् ॥ ३० ॥ तत्रस्थंतुमहादेवंसर्वभूतगणै
र्वृतं ॥ स्तुवंतिदेवाःशक्राद्याअधोलोकनिवासिनः ॥ ३१ ॥ लोकेबृहस्पतेस्तत्रसर्वभोगसमन्विताः ॥
उद्यानानिविचित्राणिनानावृक्षयुतानिच ॥ ३२ ॥ यत्रोमयावृतोनित्यंमहादेवोहिमोदते ॥ भूतानांनि
लयास्तत्रस्थानेस्थानेविभागशः॥३३॥उर्ध्वंमूर्ध्वंतुतिष्ठंतियावद्ब्रह्मांडखर्परं ॥ योजनानांचतुःकोटिस्त

पोलोकस्ततःपरं ॥ ३४ ॥ ब्रह्मैवाधिपतिस्तत्रसर्वदाऋषिसेवितः ।।रुद्रोप्यधिकृतस्तत्रतत्रस्थाननुशास्ति
हि ॥ ३५ ॥ तत्रापींद्रादयोदेवामहादेवमुपासते ॥ सहतेनैवयांत्यूर्ध्वंब्रह्माणंतेदिदृक्षवः ॥ ३६ ॥
चतुर्णामपिवेदानांगायत्र्याःप्रणवस्यच ॥ मुनीनामपिसर्वेषांद्रष्टॄणांवेदमंत्रतः ॥ ३७ ॥ विचित्राआश्र
मास्तत्रपुराणिविविधानिच ॥ उद्यानानिविचित्राणिसर्वभोगयुतानिच ॥ ३८ ॥ राजसूयाश्वमेधादि
यज्ञानांयाश्चदेवताः ॥ तासामपिचलोकावैतत्रतत्रोर्ध्वमासते ॥ ३९ ॥ कोटयोष्टौतपोलोकात्सत्यलो
कःप्रकीर्तितः ॥ यत्रब्रह्मास्वयंदेवैःसदैवोपास्यतेभृश ॥ ४० ॥ गंगातुविरजातत्रसदावहतिपावनी ॥
मंदाकिनीततोधस्तात्स्रवतन्नामिकास्मृता ॥ ४१ ॥ गंगाभूलोकगासैवपुनातेपापिनांगणान् ॥ भो
गावतीचपातालेतत्रस्थानांतुनंदिनी ॥ ४२ ॥ योगिनोध्याननिष्ठायेशरीरेचरमेस्थिताः ॥ ॥ लिंगभं
गार्थिनस्तत्रतिष्ठंतेचैवसर्वदा ॥ ४३ ॥ ततऊर्ध्वंतुमेलोकोवैकुंठाख्योहिवर्तत ॥ षट्त्रिंशल्लक्षहीनास्तु
कोटयोनवतन्मितः ॥ ४४ ॥ पंचविंशतिकोटयस्तुभूलोकादंडखर्परं ॥ ऊर्ध्वमूर्ध्वंपुण्यलोकैःसर्वतः
परिपूरितं ॥ ४५ ॥ नहिस्वल्पोपिदेशोस्तियत्रलोकोनविद्यते ॥ निधानंसर्वबीजानांब्रह्मांडमितिकी
र्तितं ॥ ४६ ॥ दशलक्षयोजनानांकटाहघनतास्मृता ॥ जलाग्निवायुव्योमाहंमहत्तत्त्वगुणत्रयैः ॥ ४७॥
क्रमाद्दशगुणैरेतैर्वृतमावरणैरिदं ॥ नवभिःसर्वतोदिक्षुस्थूलैःप्रकृतिजन्मभिः ॥ ४८ ॥ वैकुंठस्यतुविस्ता
रोयावदंडकटाहकः ॥ अष्टाविंशत्कोटयःस्याद्योजनानांसमंततः ॥ ४९ ॥ श्रीभागेमध्यमस्तत्रपूर्वप

श्रिमदीर्घता ॥ यावदंडकटाहोस्तिविस्तारस्तस्यमेशृणु ॥ ५० ॥ विंशति कोटयोमध्येसमुद्रद्वयसं
वृतः ॥ भूभागोदक्षिणेतस्यकोटियोजनविस्तृतः ॥ ५१ ॥ दुर्गाभागस्तूत्तरेस्तितावद्विस्तारवांस्तथा ॥
त्रयाणामुन्नताप्रोक्तायावदंड कटाहकं ॥ ५२ ॥ श्रीभूमिभागयोर्मध्येलक्षद्वयसुविस्तृतिः ॥ अरनामासु
धांभोधिर्ममशक्त्यैवतिष्ठति ॥ ५३ ॥ तत्रार्थोभूमिभागास्तिभूम्यासाकंविनश्यति ॥ क्रीडास्थानंतुमुक्ता
नांसर्गेसर्गेचजायते ॥ ५४ ॥ अर्धस्तत्रश्रियोभागःसदामुक्तैर्निषेवितः ॥ प्रलयेसृष्टिकालेचननश्यति
नजायते ॥ ५५ ॥ वैकुंठ शाश्वतःसोयंतृतीयंधाममामकं ॥ पुण्यनामासागरस्तुपीयूषपरिपूरितः ॥
॥ ५६ श्रीदुर्गाभागयोर्मध्येमुक्तामुक्तनिषेवितः ॥ अरवद्विस्तृतिर्दैर्घ्यनाशोनित्यत्वमेवच ॥ ५७ ॥
ज्ञातव्यंदेविसर्वंतेकथितंविस्तरान्मया ॥ ब्रह्मैवंपद्मकल्पेतुसृष्ट्वालोकान्सुरानृषीन् ॥ ५८ ॥ मनुष्या
न्दानवान्यक्षान्गंधर्वान्राक्षसानपि ॥ पितृन्नागान्पशून्कीटान्पूर्णं ब्रह्मांडमातनोत् ॥ ५९ ॥ तत
स्तुपद्मकल्पांतेपरार्धांतेविधेरपि ॥ शिश्येचतुर्मुखोदेविकल्पांतेप्रलयोभवत् ॥ ६० ॥ मग्नात्वंसलिले
देविनकिंचिदवशेषितं ॥ सृष्टिकालेपुनःप्राप्तेत्वामदृष्ट्वासपद्मभूः ॥ ६१ ॥ तुष्टाववेदवाणीभिर्मांतदा
शरणंगतः ॥ ततोवाराहरूपेणत्वांनिमग्नांजलेतदा ॥ ६ ॥ ऊर्ध्वंतुप्राविशंयावत्तावद्दैत्योमहान
भूत् ॥ हिरण्याक्षोब्रह्मजातःसचक्रेमार्गरोधनं ॥ ६३ ॥ पृथ्वीमुद्धरतादेविसतदादंष्ट्रयाहतः ॥ मनारै
वततोदैत्यःपश्चात्पृथ्वींजलोपरि ॥ ६४ ॥ यथापूर्वंविधायैवश्वेतद्वीपमगांततः ॥ ब्रह्मातुष्टावमांपश्चा

स्सर्वदेवगणैर्वृतः ॥ ६५ ॥ ततोयंश्वेतवाराहकल्पोनाम्नाभिधीयते ॥ यथापूर्वंससर्जासौब्रह्मासर्वान्सु
रानपि ॥ ६६ ॥ जयश्चविजयश्चैवद्वावेताद्वारपालकौ । मांद्रष्टुमागतान्भक्त्यासनकादीन्महामुनीन् ॥
॥ ६७ ॥ वर्जयामासतुर्मोहात्तेकुद्धाशेपुराशुतौ ॥ दैत्यौभवतामित्येवंततस्तौकश्यपात्मजौ ॥ ६८ ॥
बभूवतुर्हिरण्याक्षस्तत्रैकास्मिन्प्रविष्टवान् ॥ सपुनःपृथिवीमेनांवेष्टयित्वान्यमज्जयत् ॥ ६९ ॥ पुनर्ब्र
ह्मादेवगणैःश्वेतद्वीपेस्थितंचमां ॥ तुष्टाववेदवाणीभि कार्यमेतन्न्यवेदयत् ॥ ७० ॥ ततोहं
तलहस्तेनकर्णेदैत्यंनिजघ्निवान् ॥ सममारतत पृथ्वीं वांदेवींसलिलोपरि ॥ ७१ ॥ यथापूर्वं
निहितवांस्तत्सर्वंविदितंतव ॥ माभूत्तेमज्जनंभूयइतिस्थैर्यार्थमेवते ॥ ७२ ॥ शेषनागमवा(धर्तुं
तदधस्ताद्धरेपुनः ॥ तस्याप्याधारभूतोयंवायुःकूर्मशरीरवान् ॥ ७३ ॥ तस्याप्याधारभूतासोच्छक्तिर्ल
क्ष्मीरधःस्वय ॥ ततःपरंतुयासृष्टिरभूत्साकथितापुरा ॥ ७४ ॥ अष्टादशसहस्राणिकल्पाएवंभवंतिहि
॥ भवेत्पूर्वंपरार्धंतुद्वितीयंपुरुषस्यहि ॥ ७५ ॥ सृष्टिकालाष्टभिर्भागःशिष्टेस्यात्प्रलयोद्भवः ॥ यद्यदं
तेसमुत्पन्नंतत्तदादौविनश्यति ॥ ७६ ॥ व्युत्क्रमेणलयःप्रोक्तःसर्वेषामेवदेहिनां ॥ देहस्तेषांतुजीवा
नांद्विविधःपरिकीर्तितः ॥ ७७ ॥ भुक्त्यर्थंकर्मणोभोगान्मुक्त्यर्थंतत्रमेशृणु ॥ देहेहंमनताबुद्धिरज्ञानंप
रिकीर्तितं ॥ ७८ ॥ संसारबीजमेतद्धिसर्वेषामेवदेहिनां ॥ ब्रह्मणोपिभवेन्मोहःकदाचिद्देहयोगतः
॥ ७९ ॥ नतुतस्मिन्स्थिरःसस्यादतश्चज्ञानिनांवरः ॥ अन्येषांकिमुवक्तव्यमज्ञानंदेहिनामपि ॥ ८० ॥

अनेकेष्वपिदेहेषुमद्भक्त्याशांधिततांतराः ॥ तेषांविज्ञानरविणामोहांधतमसांलयः ॥ ८१ ॥ तेषांतुचर
मोदेहोयोगिनांदग्धवस्त्रवत् ॥ यान्तब्रह्मलयंतिष्ठेत्ततस्तेब्रह्मणासह ॥ ८२ ॥ ब्रह्मांडस्फोटनात्पश्चा
त्सवावरणनागतः ॥ पुरुषंप्रविशेयुस्तेलिंगदेहावशेषकाः ॥ ८३ ॥ विरजायांततःस्नाताभग्नलिंगास्ततः
परं ॥ श्वेतद्वीपंविलोक्यैवतेनैवब्रह्मणासह ॥ ८४ ॥ मोदंतेसर्वलोकेषुमुक्तबंधाःसमस्तशः ॥
एषांतुकर्मणोभोगाद्देहनाशोभवेदिह ॥ ८५ ॥ नाज्ञाननाशतस्तेषांतेसर्वेप्राणमेवहि ॥ प्रविश्य
यांतिपरतोब्रह्मांडस्फोटनात्परं ॥ ८६ ॥ नजानंतिदिवारात्रंमूर्छिताइवसर्वशः ॥ प्राणसूत्रंप्र
विश्यैववासुदेवोदरंविशेत् ॥ ८७ ॥ सर्वंहिप्राकृतंदेविप्रकृत्यामेवलीयते ॥ व्युत्क्रमेणैवतत्वा
नांसर्वेषांप्रलयःस्मृतः ॥ ८८ ॥ इतिसंक्षेपतःप्रोक्तंयद्यत्पृष्टंत्वयानघे ॥ परमंगुह्यमेतद्धिमद्भक्तान्श्राव
येतयः ॥ ८९ ॥ सृष्टिंचप्रलयंचैवब्रह्मांडरचनामपि ॥ पठेज्जपेच्चयोभक्त्यालोकान्प्राप्नोतिशाश्वतान् ॥
॥ ९० ॥ संशयंयःकरोत्यत्रमदुक्तेदेविकर्हिचित् ॥ बंधमोक्षौचतस्यस्तोमग्नोभवतिसंसृतौ ॥ ९१ ॥
नैवाख्येयमभक्तायतथामद्वेषिणेपिच ॥ भक्तायैवप्रदातव्यंममभक्तिविवृद्धये ॥ ९२ ॥ ॥ इतिश्रीवारा
हपु०चा०म० पंचदशोध्यायः ॥ १५ ॥ ॥ श्रीवराहउवाच ॥ ॥ द्वादश्यांविधिवत्स्नात्वानित्य
कर्मविधायच ॥ शालग्रामादिकाःपश्चात्प्रतिमाःपूजयेन्मम ॥ १ ॥ विसर्जयित्वानिर्माल्यंततःपंचा
मृतेनच ॥ शुद्धोदकेनचपुनःसुगंधिभिरथोदकैः ॥ २ ॥ स्नापयेत्क्रमशोविद्वान्तत्तन्मंत्रैर्यथाविधि ॥

वस्त्रयज्ञोपवीतानिपरिधाप्यततोर्पयेत् ॥ ३ ॥ घनीभूतंचंदनंचकस्तूरीकुंकुमादिकं ॥ तुलसीमिश्रि
तंसर्वतुलसीमंजिरीरपि ॥ ४ ॥ पुष्पाणिचसुगंधीनिदूर्वाश्चापिमनोहराः ॥ अलंकारान्यथास्थानंश
क्त्यारत्नानिचार्पयेत् ॥ ५ ॥ ध्यायेच्चापियुतंलक्ष्म्यासर्वाभरणभूषितं ॥ प्रसन्नंसुस्मितंशांतंसुस्निग्धापां
गवीक्षितं ॥ ६ ॥ ततोधूपंसमर्प्याथदीपंचापिनिवेदयेत् ॥ सार्धत्रिवारनीराज्यततोनैवेद्यमर्पयेत् ॥ ७ ॥
पक्वान्नानिविचित्राणिविविधंपायसंतथा ॥ घनीभूतंघृतंक्षीरंनवनीतंतथादधि ॥ ८ ॥ अवश्यमर्पयेद्दे
वियथाशक्त्यल्पमेववा ॥ शर्कराचसितादेयातथैवामलकीफलं ॥ ९ ॥ यद्यदिष्टंभवेत्स्वस्यविप्राणांचा
पियत्प्रियं ॥ तत्तन्निवेदयेन्मह्यंतदनंतफलंस्मृतं ॥ १० ॥ सर्वभोज्येषुसारंवैघृतमाहुर्मनीषिणः ॥ पि
तृणांचैवदेवानांपरंतुष्टिकरंत्विदं ॥ ११ ॥ द्रवीभूतंघृतंचैवद्रवीभूतंचचंदनं ॥ नार्पयेन्ममतुष्ट्यर्थंघनीभू
तंतदर्पयेत् ॥ १२ ॥ अभिषेकेतथाहोमेद्रवीभूतंघृतंवरं ॥ नान्यत्रतत्प्रशस्तंस्याद्दैवेपित्र्येचकर्मणि ॥
॥ १३ ॥ द्रवीभूतंघृतंश्राद्धेविप्रान्भोजयतेतुयः ॥ पितरोनैवतृप्यंतिश्राद्धमल्पफलंहितत् ॥ १४ ॥
घनंघृतंब्राह्मणेभ्योयोहिभोजयतेनरः ॥ उत्सवादौपैतृकेवाममतुष्ट्यर्थमेवत्रा ॥ १५ ॥ तदहंस्त्वयम
श्नामिनात्रकार्याविचारणा ॥ अभिवृद्धिंसंततेर्योमर्त्योवांछतिसर्वदा ॥ १६ ॥ नवनीतंसदद्यान्मेत
थाक्षीरंसशर्करं ॥ यस्मिन्कालेतुयत्प्राप्तमनिषिद्धंचयद्भवेत् ॥ १७ ॥ सिद्धंवासाध्यमानंवास
र्वमत्र्यंनिवेदयेत् ॥ यस्यकामेषुनोवांछामद्भक्तिस्तस्यवर्धते ॥ १८ ॥ मद्भक्तेस्तुफलंमोक्षोमह्लो

केचिरवासिता ॥ सुगंधिशीतलंवारिततोमह्यंनिवेदयेत् ॥ १९ ॥ भुंजानंरमयासार्धंक्रीडयामंगुणान्वितं ॥ विविधान्नानिपेयानिभक्ष्यचोष्यादिकानिच ॥ २० ॥ ध्यायेज्जवनिकांकृत्वाममस्वरूपंचनध्यगः ॥ मूलमंत्रंस्वस्थचेताजपेदष्टोत्तरंशतं ॥ २१ ॥ निष्ठीवनंक्षुतंजृंभंदुरालापांश्चवर्जयेत् ॥ प्रास्त्रिन्नगात्रःक्रुद्धोवासुप्यमानोनवार्चयेत् ॥ २२ ॥ तांबूलदक्षिणांशक्त्यादत्त्वानीराजयेत्ततः ॥ तुलसीपुष्पसंमिश्रंपुष्पांजलिमथार्पयेत् ॥ २३ ॥ प्रणामान्दंडवत्कुर्याच्चत्वारिंशत्तथाष्टच ॥ षट्त्रिंशद्वाचतुर्विंशत्षोडश द्वादशापिवा ॥ २४ ॥ पंचाधिकान्सर्वथैवप्रणमेन्मामनुस्मरन् ॥ चतसृभ्योधिकाःकार्याःपूजांतेच प्रदक्षिणाः ॥ २५ ॥ तालवृंतंदर्पणंचचामरंछत्रपादुकां ॥ अर्पयित्वार्थविसृजेत्सुजनंप्रत्यहंमम ॥ २६ पंचरात्रोक्तमार्गेणपूजामेवतुनित्यशः ॥ विदध्याद्योचिरेणासोमत्सान्निध्यमवाप्नुयात् ॥ २७ ॥ ब्राह्मणान्पूजयेत्पश्चादंघ्रिक्षालनपूर्वकं ॥ विप्रपादविनिर्मुक्तांशिरसाधारयेज्जलं ॥ २८ ॥ तस्यैवसर्वतीर्थानांजायतेस्नानजंफलं ॥ चंदनैश्चार्चिताविप्राःपुष्पधूपादिपूजिताः ॥ २९ ॥ यस्यतुष्टानतस्यास्तिदुष्प्रापंभुवनत्रये ॥ घनीभूतैर्घृतैःक्षीरैःपायसैर्मान्निवेदितैः ॥ ३० ॥ दध्नाशर्करयास्त्रैरंवांछितान्नैःपुनःपुनः ॥ तर्पयेन्ममतुष्ट्यर्थंमन्मुखंब्राह्मणायतः ॥ ३१ ॥ सुगंधिशीतलंतोयंब्राह्मणेभ्योददातियः ॥ नस्यात्संसारतापोवैतस्यजन्मनिजन्मनि ॥ ३२ ॥ यस्तुसंन्यासिनोविप्रान्शांतान्दांतान्विरागिणः ॥ भोजयेद्भक्तिपूर्वंतुतस्यपुण्यमनंतकं ॥ ३३ ॥ नैष्ठिकब्रह्मचारीयोगृहस्थाद्द्विगुणःस्मृतः ॥ सन्यासोद्विगुणस्त

स्माद्योगृहस्थोभवेद्यदि ॥ ३४ गार्हस्थ्यमगृहीत्वैवब्रह्मचारीयतिर्भवेत् ॥ सनैष्ठिकात्रिगुणितंभो
जितोददतफलं ॥ ३५ ॥ पर्यायेणैवभुंजीतनैकान्नाशीभवेद्यतिः ॥ एकान्नंयस्तुभुंजीतत्रिदिनं
लोभतोयदि ॥ ३६ ॥ व्रतहानिर्भवेत्तस्यपराकेणविशुध्यति ॥ भुंजीतनात्रहस्वादुस्निग्धंवानि
यतोयतिः ॥ ३७ ॥ रेतोद्भवोभवेत्तस्यदिनमेकमुपोषणं ॥ प्रायश्चित्तंस्मृतंयस्तुरेतोभावयतेबलात् ॥
॥ ३८ ॥ पराकस्तेनवैकार्यःस्त्रीसंगेद्वादशाब्दिकं ॥ द्विवारंयस्तुकुर्वीतस्त्रीसंगंकर्हिचिद्यतिः ॥ ३९ ॥
द्वादशाब्दत्रयंतस्यप्रायश्चित्तंविनिर्दिशेत् ॥ तृतीयेनिष्कृतिर्नास्तिततःसपतितोभवेत् ॥ ४० ॥ अभक्ष्य
भक्ष्येस्त्रीसंगेगृहस्थेयद्विशोधनं ॥ ततोदशगुणंज्ञेयंनैष्ठिकब्रह्मचारिणः ॥ ४१ ॥ ततोदशगुणंप्रोक्तंप्राय
श्चित्तंवनाश्रमे ॥ ॥ धरण्युवाच ॥ ॥ कान्यन्नानिनिषिद्धानितद्भुक्तौशोधनंचकिं ॥ ४२ ॥ तन्म
मारव्याहिदेवेंद्रश्रोतुमिच्छामितेमुखात् ॥ ॥ श्रीवराहउवाच ॥ ॥ परान्नंनैवभुंजीतपरपक्वंविशेषतः
॥ ४३ ॥ तथागणान्नंशूद्रान्नंस्वयंपक्वमपित्यजेत् ॥ योहियस्यान्नमश्नातिसतस्याश्नातिकिल्बिषं ॥
॥ ४४ ॥ तथापितारतम्येनवक्ष्येपापंचशोधनं ॥ यदाकदापियोश्नातिपरान्नंसुद्विजोत्तमः ॥
॥ ४५ ॥ भक्त्यादत्तंचामिष्टंचदुर्भिक्षाद्यापदंविना ॥ तद्दिनेयत्कृतंपुण्यंतदर्धंदातारिव्रजेत् ॥ ४६ ॥
अभक्त्यायदिदत्तंतुपुण्यपादंततोलभेत् ॥ अभीष्टमपिचेद्दद्यात्सत्यांशक्तौतदाष्टमं ॥ ४७ ॥ पुण्यांशं
लभतेदातुर्दुर्भिक्षेचचतुर्गुणं ॥ आपद्यन्नप्रदातापिफलंदुर्भिक्षवल्लभेत् ॥ ४८ ॥ नधर्महानिर्विप्रस्यदु

र्भिक्षेप्राणसंकटे ॥ महापादिदुरन्नंयोभुंक्तेप्राणरिरक्षया ॥ ४९ ॥ दाताचलभतेपुण्यंजीवदानसमंतदा॥
अनापदितुयोश्नातिपरान्नंद्रव्यलोभतः ॥ ५० ॥ अवश्यंतुभवेत्तस्यधर्महानिर्नसंशयः ॥ बांधवानां
तुसौहार्दाद्योनिसंबंधतोपिवा ॥ ५१ ॥ भुंजानस्यपरान्नानिनैवधर्मोविहीयते ॥ पितुर्भ्रातुःपितृव्या
देःसापिंडस्यगुरोरपि ॥ ५२ ॥ दौहित्रश्वशुरादीनांस्वस्त्रीसंबंधिनांतथा ॥ मातामहस्यचत्सूनोर्मातुः
स्वस्त्रादिकस्यच ॥ ५३ ॥ यद्यत्प्रीत्यान्नमश्नातिपरान्नंदोषकृन्नहि ॥ भक्त्यादत्तंतुयोभुंक्तेतद्धर्मोहीयते
ध्रुवं ॥ ५४ ॥ स्वकीयान्सुहृदोहित्वायोग्यानुत्सवमाचरेत् ॥ दैविकंपैतृकंवापितस्यपुण्यक्षयोभवेत् ॥
॥ ५५ ॥ स्वोपजीविषुयःकुर्यादुपेक्षांमंदमादरं ॥ तेनापिहिभवेत्तस्यध्रुवंपुण्यस्यसंक्षयः ॥ ५६ ॥
दिनपुण्यस्ययत्रार्धंक्षीयतेतत्रशोधनं ॥ द्विर्जपेदस्यवामीयंगायत्र्यावाशतंजपः ॥ ५७ ॥ बलात्कारेणयो
श्नीयाद्द्विगुणंतस्यशोधनं ॥ नेवदातुःफलंतत्रभोक्तापापेनलिप्यते ॥ ५८ ॥ पृथक्पाकेर्धमुद्दिष्टंप्राय
श्चित्तंयथोक्ततः ॥ दातुःफलंपूर्णमेवतस्यपुण्यंनहीयते ॥ ५९ ॥ अधिकंतुभवेद्दातुर्वैश्वदेवादिनापृथ
क् ॥ स्वगृहेपच्यतेयस्तुपादांशस्तत्रशोधनं ॥ ६० ॥ द्वितीयेह्यष्टमांशःस्यात्तृतीयेषोडशांशतः ॥
चतुर्थेदिवसेप्राप्तेद्वात्रिंशांशस्तुशोधनं ॥ ६१ प्रायश्चित्तंतुविप्रान्नेयदुक्तंवेदवादिभिः ॥ द्विगुणंतत्क्ष
त्रियान्नेवैश्यान्नेत्रिगुणंततः ॥ ६२ ॥ चतुर्गुणंतुशूद्रान्नेक्रमशःपरिकीर्तितं ॥ पितुर्मातुश्चयोवर्णस्त
द्वर्णोक्तार्धमेवच ॥ ६३ ॥ अनुलोमान्नशुद्धिःस्याद्विलोमेकथयामिते ॥ उच्चवर्णाभवेन्मातानीचव

र्णःपितायदि ॥ ६४ ॥ विलोमःप्रतिलोमश्चविपरीतेतुलोमकः ॥ पितृवर्णसमादाययावत्स्यान्मातृवर्णकः ॥ ६५ ॥ यदुक्तंयावतापापंप्रायश्चित्तंचतावता ॥ ऊहनीयंप्रयत्नेनस्वात्मनःशुद्धिमिच्छता ॥ ६६॥ ब्राह्मणस्यत्रयःपुत्रास्त्रिवर्णेष्वनुलोमजाः ॥ शूद्रस्यचत्रयःपुत्रास्त्रिवर्णेप्रतिलोमजाः ॥ ६७ ॥ त्रयस्त्रयःक्षत्रविशोः प्रतिलोमानुलोमजाः ॥ एवंद्वादशवर्णानांपुत्राःप्रत्येकमेवते ॥ ६८ ॥ चातुर्वर्ण्येप्रसूयंतेचतुरश्चतुरःसुतान् ॥ तेचत्वारिंशदष्टौचपूर्वैर्द्वादशभिःसह ॥ ६९ ॥ चतुर्वर्ण्यैनसंयुक्ताश्चतुःषष्टिर्हिजातयः ॥ तेभ्यस्ताभ्यःपुनस्तत्रस्त्रीभिःपुंभिश्चयोगतः ॥ ७० ॥ लक्षशःकोटिशस्त्वेवंजातयोहिभवंतिहि ॥ तास्तुसंकरसंज्ञाःस्युःपंचषष्टितमाहिताः ॥ ७१ ॥ बाह्याविधिनिषेधाभ्यांपशुवत्ताःप्रकीर्तिताः ॥ दानेप्रतिग्रहेतास्तुवर्जनीयाःप्रयत्नतः ॥ ७२ ॥ यदिप्रमादात्तद्दानंगृह्णीयात्तत्परित्यजेत् ॥ तावदेवस्वकीयंचदत्वापापाद्विमुच्यते ॥ ७३ ॥ महापादितत्तोदानंगृह्णीयाद्यदिजीवितुम् ॥ तदप्यर्धंब्राह्मणायदत्वार्धेनस्वपोषणम् ॥ ७४ ॥ ययावृत्त्याप्रकुर्वीतजीविकांयोहिजातिमान् ॥ दानेप्रतिग्रहादौचतज्जातिःसउदाहृतः ॥ ७५ ॥ यदर्जितंतयावृत्त्याविप्रेभ्यःसर्वमेवतत् ॥ दत्वास्वजातिमाप्नोतितीर्थस्नानादिकेकृते ॥ ७६ ॥ परान्नंयोहिभुंजीतदशम्यांद्वादशीदिने ॥ एकादशीव्रतस्यास्यदशम्यांतुर्यभागतः ॥ ७७ ॥ द्वादश्यामर्धभागश्चदातारमधिगच्छति ॥ यदुक्तंतेपुरादेविप्रायश्चित्तंव्रतक्षये ॥ ७८ ॥ तत्पादंचतदर्धंचचरित्वाशुद्धिमाप्नुयात् ॥ अमावास्यादिनेयस्तुपरान्ना

शीभवेन्नरः ॥ ७९ ॥ जीवन्नपिपितापुण्यंक्षीयतेतद्दिनोद्भवं ॥ दातातुलभतेपुण्यंत्रिंशद्ब्राह्मणसंमितं ॥ ८० ॥ प्रमीतपितृकोप्येवंपुण्यंतुल्यंप्रकीर्तितं ॥ पुण्यक्षयोभवेद्भोक्तुर्मासमात्रार्जितस्यच ॥ ८१ ॥ गायत्रीषट्सहस्रंतुतेनजाप्यंविशुद्धये ॥ शतद्वयंजपोजीवत्पितृकोप्यात्मशुद्धये ॥ ८२ ॥ प्रेतपक्षोयदर्शेतुतद्द्वादशगुणंस्मृतं ॥ दातुःपुण्यंतथैवस्यात्प्रायश्चित्तंतथैवच ॥ ८३ ॥ प्रायश्चित्तार्द्धमुद्दिष्टंब्राह्मणस्य प्रवासिनः ॥ तदर्धंतुदरिद्रस्यमहापदिनकिंचन ॥ ८४ ॥ पराकस्तुसमुद्दिष्टोमहैकोद्दिष्टभोजिनः ॥ नवश्राद्धेचपाथेयेनग्नप्रच्छादनेतथा ॥ ८५ ॥ पराकाणांत्रयंकार्यंअस्थिसंचयनेतथा ॥ आद्यश्राद्धाशिनाकार्यंचांद्रायणंविशुद्धये ॥ ८६ ॥ प्राजापत्यत्रयंचैवमासिकोद्दिष्टभोजिनः ॥ सापिंडीकरणश्राद्धेप्राजापत्यचतुष्टयं ॥ ८७ ॥ सपिंडीकरणादूर्ध्वंमासिकंपार्वणंभवेत् ॥ एकोद्दिष्टंतुयःकुर्यात्सपिंडीकरणेकृते ॥८८॥ तच्छ्राद्धंनिष्फलंप्रोक्तंपुनःप्रेतत्वमाप्नुयात् ॥ पार्वणेमासिकेभुक्त्वाप्राजापत्यंविशोधनं॥८९ आब्दिकेप्रथमेप्रोक्तमुपवासत्रयंबुधैः ॥ प्रत्याब्दिकेतुकुर्वीतदिनमेकमुपोषणं ॥ ९० ॥ सहस्रंवाथगायत्र्याजपेन्नियतमानसः ॥ क्षयाहेयःपरान्नाशीदिनद्वयमुपोषणं ॥ ९१ ॥ मासमेकंतुयोश्नातिपरान्नंमिष्टमेवच ॥ प्राजापत्यंविशुद्ध्यर्थंयदिभक्त्यैवलभ्यते ॥ ९२ ॥ राहूपरागेयोभुंक्तेपरान्नंतस्यशोधनं ॥ पराकएवकथितोवटश्राद्धेतथाश्नतः ॥ ९३ ॥ वैधृतौचव्यतीपातेषडशीतिमुखेतथा ॥ तथाविष्णुपदेभुंक्तेएकाहंसमुपोषयेत् ९४ मन्वादौचयुगादौचप्रेतपक्षेतुचाश्नतः ॥ तथानैमित्तिकेश्राद्धेगायत्रीद्वि

शतंजपेत् ॥ ९५ ॥ अयनेविषुवेचैवभुंजानस्यविशोधनं ॥ गायत्र्ययुतपादःस्यादथवोपोषणद्वयं ॥९६
दातुर्महाफलंप्रोक्तंभक्त्याभोजयतोद्विजान् ॥ एवंतीर्थविशेषेतुमहत्पुण्यमुदीरितं ॥ ९७ ॥ अन्येषुदु
ष्टदानेषुपुरैवोक्तंविशोधनं ॥ इत्थंधर्मस्यमीमांसासूक्ष्मात्सूक्ष्मतरापरा ॥ ९८ ॥ कथितादेवित्वत्प्रीत्या
गुह्यमेतत्परंहियत् ॥ ब्राह्मणान्भोजयित्वातुयावत्तृप्तियथारुचि ॥ ९९ ॥ तोषयेद्दक्षिणाभिस्तान्दाता
स्यान्मध्यमोयदि ॥ भुक्तान्नमूल्याद्द्विगुणादक्षिणाह्युत्तमास्मृता ॥ १०० ॥ तदर्धामध्यमाप्रोक्ताकनि
ष्ठातुतदर्धतः ॥ धनिकेद्विगुणंप्रोक्तंदरिद्रेत्वर्धमीरितम् ॥ १०१ ॥ पुण्यहानिर्भवेत्तस्यदक्षिणाभिर्विना
न्यथा ॥ साष्टांगंप्रणमेत्पश्चान्मंत्रानेतानुदीरयन् ॥ २ ॥ समस्तसंपत्समवाप्तिहेतवःसमुत्थितापत्कुल
धूमकेतवः ॥ अपारसंसारसमुद्रसेतवःपुनंतुमांब्राह्मणपादपांसवः ॥ ३ ॥ आपद्घनध्वांतसहस्रभानवः
समीहितार्थार्पणकामधेनवः ॥ समस्ततीर्थांबुपवित्रमूर्तयोरक्षंतुमांब्राह्मणपादपांसवः ॥ ४ ॥ विप्रौघद
र्शनात्क्षिप्रंक्षीयंतेपापराशयः ॥ वंदनान्मंगलावाप्तिरर्चनादच्युतंपदम् ॥ ५ ॥ आधिव्याधिहरंनृणांमृ
त्युदारिद्र्यनाशनं ॥ श्रीपुष्टिकीर्तिदंवंदेविप्रश्रीपादपंकजं ॥ ६ ॥ पंचप्रणामान्कृत्वैवमनुज्ञाप्यततोद्वि
जान् ॥ सुहृद्भिःसाधमश्नीयात्सकुटुंबोदयान्वितः ॥ ७ ॥ दीनैरनाथैःकृपणैरन्नमात्रार्थिभिस्तथा ॥
नैकःस्वादुसमश्नीयादामिषंतद्बुधैःस्मृतं ॥ ८ ॥ यदिस्याद्द्वादशीस्वल्पातदातुब्राह्मणैःसह ॥ भुक्त्वाद
द्याद्दक्षिणादिद्विजातीनामयंविधिः ॥ ९ ॥ आमान्नान्यपरेदत्वाभुंजीरन्सर्वदैवहि ॥ ततःसायंप्रकुर्वी

तममपूजांचभक्तितः ॥ नानाविधानिखाद्यानिफलानिविविधानिच ॥ १० ॥ नवनीतंदधिक्षीरंघन
माज्यंसुगंधिच ११ ॥ विकारानैक्षवांश्चापिशर्करादिस्वशक्तितः ॥ निवेद्यमांसतांबूलंदक्षिणांच
स्वशक्तितः ॥ १२ ततोनीराजयित्वातुप्रणम्याचम्यभक्तितः ॥ ब्राह्मणेभ्यःप्रदायैवस्वयमश्नीतमा
नवः ॥ १३ ॥ ब्रह्मचारीस्वपेद्रात्रौस्मरन्मत्पादपंकजं ॥ प्रतिद्वादशिकुर्वीतपूजामेवंस्वशक्तितः॥१४॥
चातुर्मास्येविशेषेणमत्प्रीतिरतुलाभवेत् ॥ इतितेसर्वमाख्यातंकिमन्यच्छ्रोतुमिच्छसि ॥ १५ ॥
इतिश्रीवा० पु०चा०मा०षोडशोध्यायः ॥ १६ ॥ ॥ ६९ ॥ ॥ धरण्युवाच ॥ ॥ त्वयिसुप्ते
जगन्नाथेकोदेवःपूज्यतांव्रजेत् ॥ कर्तव्यंवानकर्तव्यमभक्ष्यंभक्ष्यमेववा ॥ १ ॥ कथंत्वन्मूर्तयःपूज्या
आत्मनोभ्युदयार्थिभिः ॥ एतद्विस्तरतोब्रूहिश्रोतुमिच्छामितत्वतः ॥ २ ॥ ॥ श्रीवराहउवाच ॥
॥ ममालस्यंचनिद्राचदुःखमज्ञानमेवच ॥ अशक्त्यादिनचैवास्तिसर्वदोषविवर्जनात् ॥ ३ ॥ यस्तु
दोषंस्वल्पमपिमयिसंभावयेन्नरः ॥ अधःपातोभवेत्तस्यनरकेचिरवासता ॥ ४ ॥ तथापिलीलयादेवि
नानामूर्तिभिरन्वहं ॥ क्रीडाभि स्वेच्छयैवाहंतत्तन्मूर्तिविभेदतः ॥ ५ ॥ सुप्तोहमपिदुग्धाब्धौजागर्मि
सततोत्थितः ॥ मदाधारंविनाविश्वंक्षणादेवविलीयते ॥ ६ ॥ ब्रह्माद्यादेवताःसर्वाःसूत्रमणिगणाइव॥
मदाधारेणकुर्वंतिजगत्सृष्टच्प्ययादिकं ॥ ७॥ तृणच्छेदेपिनास्त्येषांसामर्थ्यंस्वतएवतु ॥ लक्ष्म्याअपि
नचास्त्येवकिमुतान्येहिदुर्बलाः ॥ ८ ॥ अतोहंसर्वकालेषुसर्वदेशेषुसर्वतः ॥ सावधानःसर्वजीवान्निय

च्छामिस्वकर्मसु ॥ ९ ॥ अनादिकर्मबद्धांस्तांस्तत्तत्कर्मानुसारतः ॥ प्रवर्तयामिकार्येषुनमेद्वेष्योस्तिनप्रियः
॥ १० ॥ मयिप्रीतिस्तुयस्यस्यात्समेप्रीतिफलंलभेत् ॥ औदासीन्यंचद्वेषोवाभावःस्याद्यस्ययादृशः ॥
॥ ११ ॥ तादृशंतुफलंतस्यशुभंवाप्यशुभंभवेत् ॥ तद्भक्त्यानहिमेलाभस्तद्वेषेणनमेक्षतिः ॥ १२ ॥
लाभःक्षतिश्चतस्यैवयथाभावस्तथाफलं ॥ येयथामांप्रपद्यंतेतांस्तथैवभजाम्यहं ॥ १३ ॥ नंदाभद्राज
यारिक्तापूर्णाःस्युस्तिथयःक्रमात् ॥ प्रतिपत्पूर्वकाःपंचपंचैवोभयपक्षयोः ॥ १४ ॥ अनिरुद्धश्चप्रद्युम्न
स्तथासंकर्षणस्ततः ॥ वासुदेवःपंचमीतुमूर्तिर्नारायणाभिधा ॥ १५ ॥ तिथीनांक्रमशोदेवाःपूजानां
ग्राहकाःस्मृताः ॥ मार्गशीर्षादिमासेषुकेशवाद्याश्चदेवताः ॥ १६ ॥ श्रीधरश्चहृषीकेशःपद्मनाभस्तृती
यकः ॥ दामोदरःकार्तिकेस्याच्चातुर्मास्येषुदेवताः ॥ १७ ॥ नवनीतदधिक्षीरंघनोभूतघृतंतथा ॥ अनि
रुद्धादिमूर्तीनांचतसॄणांक्रमात्प्रियं ॥ १८ ॥ नारायणस्यचत्वारिसर्वेषांशर्कराप्रिया ॥ प्रियंमासाधिपस्या
पितत्तन्मूर्तिप्रियंहियत् ॥ १९॥ नभस्येदधिनोदद्यान्नदद्यात्क्षीरमाश्विने ॥ क्षीरस्थानेघृतंदद्याद्दधिस्थाने
घनंपयः ॥ २० ॥ सर्वदैवघृतंदद्यात्सतिक्षीरादिकेपिच ॥ सर्वसारंघृतंप्रोक्तंदेवानांपरमंहविः ॥ २१॥
पितॄणांचापिसर्वेषांघृतंवैतर्पकंस्मृतं ॥ ॥ निवेद्यमांततोदत्वाब्राह्मणेभ्योपिशक्तितः ॥ २२ ॥ भुंजीत
स्वयमप्येतत्सकुटुंबोदिनेदिने ॥ यस्यशक्तिःसदानास्तिकर्तुमेवंनिवेदनं ॥ २३ ॥ चातुर्मास्येतुकर्त
व्यंसर्वथामत्प्रियैषिणा ॥ चातुर्मास्येपिचेन्नास्तिकर्तुमेवंदिनेदिने ॥ २४ ॥ श्रावणेकार्तिकेमासिशुक्ल

पक्षेपिकारयेत् ॥ एकदापिप्रकुर्वीतचातुर्मास्येदिनेदिने ॥ २५ ॥ नवनीतादिनैवेद्यंनंदादिदिनपंचके ॥
सत्यामापिहिशक्तौयोनकुर्यान्मान्निवेदनं ॥ २६ ॥ वृथाजन्मभवेत्तस्यसंपत्तिश्चापिनिष्फला ॥ कर्तव्यं
वानकर्तव्यमभक्ष्यंभक्ष्यमेववा ॥ २७ ॥ देविनानाविधंप्रोक्तंकथ्यमानंमयाशृणु ॥ अहिंसातुदयादा
नमस्तेयंचाप्यपैशुनं ॥ २८ ॥ परदारपरित्यागोब्राह्मणानांचपूजनं ॥ धर्मोयंसर्ववर्णानामविशेषेणवै
स्मृतः ॥ २९ फलवैचित्र्यमेतेषांतत्तज्जात्यनुसारतः ॥ हिंसैवजीवनंयेषांव्याधादीनांप्रकीर्तितं ॥ ३० ॥
तेषामहिंसयापुण्यंयज्ञतुल्यंदिनेदिने ॥ येतुहिंसाविहाराःस्युःक्षत्रियाद्याःपलाशनाः ॥ ३१ ॥ चातु
र्मास्येतुतेषांस्यादश्वमेधफलंसमं ॥ ब्राह्मणानांफलंनास्तियद्यहिंसाकृतापितैः ॥ ३२ ॥ हिंसयापातकं
तेषांतत्तत्प्राणिवधाद्भवं ॥ अवध्यानांवधेपापंक्षत्रियादेरपीरितं ॥ ३३ ॥ चातुर्मास्येदशगुणंपुण्यंवापा
पमेववा ॥ सुरापोपिसुरात्यागादश्वमेधफलंलभेत् ॥ ३४ ॥ मांसाशिनोमांसत्यागाद्गोदानंस्या
द्दिनेदिने ॥ पलांडुंश्वेतलशुनंश्वेतवृंताकमेवच ॥ ३५ ॥ छत्राकंगृंजरंचैवअभक्ष्यंसर्वदाद्विजैः
मतिपूर्वंद्विजोशित्वापुनःसंस्कारमर्हति ॥ ३६ ॥ रोगेणपीडितोश्चातिप्रमादेनापिवाक्वचित् ॥
उपवासत्रयंकृत्वापंचगव्येनशुध्यति ॥ ३७ ॥ शूद्रस्यमतिपूर्वंचेदुपवासोविशोधनं ॥ रक्तमूल
मलांबुचवर्तुलंगर्जरंतथा ॥ ३८ ॥ जंबीरंचकलिंगंचमसूराःशुक्तिचूर्णकं ॥ कांजिकंरक्तलशुनंकुंभीकं
चीवलीमपि ॥३९॥ मतिपूर्वंद्विजोशित्वादिनमेकमभोजनं ॥ चातुर्मास्येदशगुणमेतेषांभक्षणेस्मृतं ॥

॥ ४० ॥ कपित्थंकृष्णवृंताकंशिग्रुसूरणकोद्रवान् ॥ दीर्घालांबुंश्वेतमूलंभूमिजंलवणंतथा ॥ ४१ ॥ पुनःपक्वंपर्युषितंकृमिकेशादिदूषितं ॥ मृतकोटैःपिपीलाद्यैर्दूषितंभावदूषितं ॥ ४२ ॥ रजस्वलासूतिकाद्यैश्चांडालाद्यैश्ववीक्षितं ॥ चिच्छुंदरैर्मूषिकाद्यैर्मृतैर्यत्स्पृश्यतेतथा॥४३॥ आसन्नप्रसवाभिस्तुयदन्नंपाचितंभवेत् । अन्नादैर्बालकैर्यच्चनस्नातैःस्पृश्यतेहियत् ॥ ४४ ॥ बालोच्छिष्टानिचान्नानिखादितार्धावशेषितं ॥ फलमूलादिकंचापिकांस्यपात्रेचभोजन ॥ ४५ ॥ निष्पावान्राजमाषांश्चस्वस्त्रीमैथुनमेवच ॥ तैलाभ्यंगंमधुक्षीरंतांबूलंबलरागकृत् ॥ ४६ ॥ व्रतस्थोवर्जयेदेतान्यन्यदानैवदोषकृत् ॥ तस्माच्चतुर्षुमासेषुवर्जयेत्तानियत्नतः ॥ ४७ ॥ दशम्यादिव्रतेचैवश्राद्धाहेपिविशेषतः ॥ अमावास्यादितिथिषुपुण्यास्वेतासुवर्जयेत् ॥ ४८ ॥ महातीर्थाभिगमनेयत्नादेतानिवर्जयेत् ॥ तैलस्यमर्दनंभुक्त्विव्रतस्थोवर्जयेत्सदा ॥ ४९ ॥ पक्षद्वयेसदाभ्यंगंनदातिथिषुवर्जयेत् ॥ बुधमंदौविनान्येषुनतैलंमर्दयेन्नरः ॥ ५० ॥ पुत्रजीवनकामोहिनेंदुवारेविमर्दयेत् ॥ नित्याभ्यंगकरोयःस्यात्सोपिपित्रोर्मृतेहनि ॥ ॥ ५१ ॥ अमायांचापिसंक्रांतौदशम्यादिदिनत्रये ॥ तैलस्पर्शंनकुर्वीतकुर्वन्कुष्ठीभवेन्नरः ॥ ५२ ॥ दुश्चर्माश्यामवर्णोवाजायतेपातकात्ततः ॥ चातुर्मास्येव्रतादौवायःकुर्यात्कांस्यभोजनं ॥ ५३ ॥ गायत्रीशतकंतेनजाप्यमात्मविशुद्धये ॥ करेकर्पटकेचैवपाषाणेताम्रभाजने ॥ ५४ ॥ वटाश्वत्थार्कपर्णेषुनाश्नीयात्सर्वदाद्विजः ॥ अनापद्येषुभुंजानोगायत्रीशतकंजपेत् ॥ ५५ ॥ जपेदापदिगाय

त्रीदशकंभोजनात्सकृत् ॥ यतिभिर्विधवाभिर्वानकार्यंकांस्यभोजनं ॥ ५६ ॥ आपद्यपिनभोक्त
व्यंतथाताम्रादिभाजने ॥ वटार्काश्वत्थपर्णेषुद्दषत्पिठरयोःकरे ॥ ५७ ॥ भोजनेनैवदोषोस्तिशु
द्धपात्राणिनोयदि ॥ पलाशःकुटजस्तिदुःप्रियालःपनसस्तथा ॥ ५८ ॥ पद्मिनीप्लक्षजंब्वाम्रक
दलीचंपकादयः ॥ भोज्यपत्राःस्मृतावृक्षानदोषोभोजनाद्भवेत् ॥ ५९ ॥ शालवृक्षस्यपत्राणि
स्पृष्ट्वाचमनमाचरेत् ॥ श्लेष्मातकीफलंपत्रमुभयंनियमेवहि ॥ ६० ॥ तद्वृक्षगेतुगायत्रींजपे
देकशतंनरः ॥ आपत्कालेषुभुंजानोदुष्टपर्णादिषुक्वचित् ॥ ६१ ॥ प्रायश्चित्तंदशांशेनमहापद्दिन
दोषकृत् ॥ सौवर्णेराजतेपात्रेव्रतस्थोयोहिभोजनं ॥ ६२ ॥ करोतितस्यनैवस्याद्व्रतहानिःकथं
चन ॥ अलाभेशुद्धपात्राणांकांस्यभोजीतुयोभवेत् ॥ ६३ ॥ गृहेव्रतविशेषेषुगायत्रीदशकंजपेत्
॥ कांस्यंतुभस्मनाशुध्यत्ताम्रमम्लेनशुद्धयति ॥ परोच्छिष्टेनसंस्पृष्टंशुनाशूद्रेणवापुनः ॥ ६४ ॥
त्रिरात्रंभूमिनिक्षेपात्त्रिरात्रंभस्मशोधनात् ॥ कपित्थादीन्व्रतस्थोवैसकृद्भुंजीतयोद्विजः ॥ ६५ ॥
उपवासःप्रकर्तव्यःपंचगव्येनशुद्धिभाक् ॥ तैलंनैवहिभोक्तव्यंतैलपक्वंनदुष्यति ॥ ६६ ॥ व्रता
दौतुविशेषेणनकुर्यात्तैलभोजनं ॥ तैलभोजीनकुर्वीतपूजनंममसर्वथा ॥ ६७ ॥ चतुःशतसंसगाय
त्र्याजप्त्वाशुद्धिमवाप्नुयात् ॥ श्रावणेयस्तुशाकानिदधिभाद्रपदेतथा ॥ ६८ ॥ क्षीरंचैवाश्विने
मासिकार्तिकेद्विदलानिच ॥ भुंजानस्तत्कृतंकर्मसर्वमप्यफलंभवेत् ॥ ६९ ॥ तैलाभ्यगंचमाषान्नंवातु

र्मास्येत्यजेत्तु यः ॥ प्रत्येकमेतल्लभतेज्योतिष्टोमसमंफलं ॥ ७० ॥ अधःशय्यांतुयःकुर्यात्परित्यज्यचखट्वकं
दिनसंख्यायुगान्येषविमानैर्मोदतेदिवि ॥ ७१ ॥ स्त्रीसंनिधानेयःकुर्याद्ब्रह्मचर्यमृतुंविना ॥ दिनसंख्या
युगान्येषक्रीडतेप्सरसांगणैः ॥ ७२ ॥ ऋतुकालाभिगमनाद्ब्रह्मचर्यान्नच्यवेत् ॥ नगच्छन्नृतुकाले
तुभ्रूणहासनिगद्यते ॥ ७३ ॥ एकादश्याममायांचमातापित्रोर्मृतेहनि ॥ ऋतुकालात्ययेदोषोनैवस्या
तुकथंचन ॥ ७४ ॥ षोडशाहंभवेद्यावदृतुकालेनरःस्त्रियं ॥ रोगेणोपद्रुतोशक्तोनगच्छेन्नैवदोषभाक् ॥
॥ ७५ ॥ उन्मादेनप्रमादेनपरस्त्रीसंगमेनच ॥ स्वस्त्रीद्वेषेणनोगच्छेदृतुकालेनरःस्त्रियं ॥ ७६ ॥ सहि
दोषेणलिप्येतभ्रूणहाचभवेद्ध्रुवं ॥ वर्षमात्रंचरेत्कृच्छ्रंतत शुद्धिमवाप्नुयात् ॥ ७७ ॥ मौनव्रतंचरेद्यस्तुवेद
पाठरतःसदा ॥ सभवेत्सर्वविद्यावान्ममलोकेमहीयते ॥ ७८ ॥ भुक्तिकालेप्रकुर्वीतसदामौनंविशेषतः ॥
चातुर्मास्येप्रकुर्वाणःसदामौनफलंलभेत् ॥ ७९ ॥ हुंकारेणभवेद्धृध्रःशिरःकंपनवायसः ॥ पात्रत्यागीभवे
द्रोगीहमौनीनरकंव्रजेत् ॥ ८० ॥ नित्यदानंतुयःकुर्यात्स्वशक्त्याभक्तिमान्नरः ॥ भवेन्निधिपतिःसोपिसर्व
लोकेषुपूजितः ॥ ८१ ॥ अश्वदःसूर्यलोकीस्याद्गजदःशक्रलोकगः ॥ हेमदोवन्हिलोकीस्याद्रौप्यदश्चं
द्रलोकगः ॥ ८२ ॥ आयुष्मांदक्षकरणोवस्त्रदोजायतेतथा ॥ गवांदाताब्रह्मलोकेवापीकूपतडागकृत्
॥ ८३ ॥ मोदतेवारुणेलोकेसर्वभोगसमन्विते ॥ अश्वत्थंपिचुमंदंचन्यग्रोधंतिंतिणीदश ॥ ८४ ॥
धात्रीत्रयंपंचचूतान्यस्तुवापयतेभुवि ॥ यावल्लोकेषुतिष्ठेयुस्तावन्ननरकंव्रजेत् ॥ ८५ ॥ मत्प्रीतिकामोयः

कुर्यात्फलमन्यन्नकांक्षयेत् ॥ मत्प्रीतिरतुलातास्मिन्जायतेनरपुंगवे ॥ ८६ ॥ मल्लोकेचिरवासःस्यात्ज्ञा
नंमोक्षोपिजायते ॥ मोक्षोहिपुरुषार्थानांसर्वेषांकंचनस्मृतः ॥ ८७ ॥ इतितेसर्वमाख्यातंकिमन्यच्छ्रोतु
मिच्छसि ॥ ८८ ॥ इतिश्रीवाराहपुराणेचातुर्मास्यमाहात्म्येसप्तदशोऽध्यायः ॥ १७ ॥ ॥ धरण्यु
वाच ॥ काःस्युर्युगादयोदेवकाश्चमन्वादयःस्मृताः ॥ किंकितिथिविशेषेषुत्याज्यंतन्मेवदप्रभो ॥ १ ॥
श्रीवराहउवाच ॥ ॥ शुक्लातृतीयावैशाखेप्रेतपक्षेत्रयोदशी ॥ कार्तिकेनवमीशुक्लामाघमासेतुपूर्णिमा
॥ २ ॥ एतायुगादयःप्रोक्तादत्तस्याक्षयकारकाः ॥ मन्वादींश्चप्रवक्ष्यामिशृणुदेविसमाहिता ॥ ३ ॥
आश्वयुक्शुक्लनवमीकार्तिकेद्वादशीसिता ॥ तृतीयाचैत्रमासस्यसिताभाद्रपदस्यच ॥ ४ ॥ आषाढेदश
मीशुक्लामाघस्याच्छुक्लसप्तमी ॥ श्रावणस्याष्टमीकृष्णातथाऽषाढीतुपूर्णिमा ॥ ५ ॥ श्रावणस्यत्वमावा
स्यापुष्यस्यैकादशीसिता ॥ कार्तिकीफाल्गुनीचैत्रीज्येष्ठीपंचदशीसिता ॥ ६ ॥ मन्वंतरादयश्चैता
दत्तस्याक्षयकारकाः ॥ पितृनुद्दिश्यकुर्वीतस्नानदानंद्विजार्चनं ॥ ७ ॥ कूष्मांडबृहतीशाकंतरुगो
मूलकंतथा ॥ श्रीफलंतिलतैलंचसप्तम्यांधात्रिकाफलं ॥ ८ ॥ नारिकेलमलाबुंचपटोलंचान्नमेव
च ॥ प्रतिपत्तिथिमारभ्यभुक्त्वापापमवाप्नुयात् ॥ ९ ॥ चर्मशाकंचवल्लाकान्द्वादश्यांत्वर्जयेदपि ॥
वृंताकंचत्रयोदश्यांक्षौरंरिक्तासुवर्जयेत् ॥ १० ॥ परान्नंपूर्णतिथिषुदर्शेचैवविशेषतः ॥ नकुर्वीतनरोजा
तुतथादर्शेचमैथुनं ॥ ११ ॥ दंतकाष्टंतृणादीनांछेदनंनंगलंतथा ॥ जीवन्नपिपितायस्यनकुर्यादपि

चक्कचित् ॥ १२ ॥ व्रतस्थोहिप्रकुर्वीतनियमान्व्रतिनःसदा ॥ प्रमीतपितृकोयस्तुदर्शेस्यात्ससदाव्रती ॥ १३ ॥ नकुर्याद्यद्यपिश्राद्धंतथापिनियमीभवेत् ॥ अभ्यंगेदंतकाष्ठेचमैथुनेगमनादिषु ॥ १४ ॥ क्षौरेचातिथिवर्जेचतिथिस्तात्कालिकीभवेत् ॥ अन्येषुदेवकार्येषुतिथिःसूर्योदयस्पृशा ॥ १५ ॥ पैतृकेतुतिथिःसास्याद्यस्यामस्तमितोरविः ॥ अष्टम्यांचचतुर्दश्यांमन्वादिषुयुगादिषु ॥ १६ ॥ प्रतिपत्पौर्णिमामासुमातापित्रोर्मृतेहनि ॥ प्रेतानुगमनंकृत्वाश्रोत्रियेमरणंगते ॥ १७ ॥ सूतकेमृतकेप्याथावशुद्धौदेहदेशयोः ॥ गलग्रहेप्रदोषेचश्रोत्रियेगृहमागते ॥ १८ ॥ सन्निधानेगुरोश्चापिअनाध्यायाःप्रकीर्तिताः ॥ विनीतःसर्वदातिष्ठेद्गुरूणांसन्निधौनरः ॥ १९ ॥ नोच्चासनगतोवापिशयानोलंबपादकः ॥ देवपूजांनकुर्वीततदनुज्ञामृतेक्वचित् ॥२०॥ नोच्चैर्जल्पेन्नचहसेत्पौरुषंनैवकीर्तयेत्॥नवदेत्प्रतिकूलंचनावमन्येततत्प्रियम् ॥ २१ ॥ तदासनंनपादेनस्पृशेद्वस्त्रादिकंतथा ॥ तदाज्ञांविनयेनैवगृह्णीयान्नानृतंवदेत् ॥ २२ ॥ तत्पृष्टोहिविशेषेणसत्यंचाप्यप्रियंगुरोः ॥ रुष्टंसंसांत्वयेत्सांत्वैर्नकुर्यात्प्रतिकापनं ॥ २३ ॥ दृष्ट्वादूरात्समुत्तिष्ठेदभिगच्छेच्चमानयन् ॥ तद्वाक्यंशृणुयात्प्रीत्यायद्यदुक्तंभवेदपि ॥ २४ ॥ एकांतेगोपनीयोसौयदयुक्तंतदीरितं ॥ जिगीषयानाविवदेत्तदिच्छांनैवघातयेत् ॥ २५ ॥ देवादपिगुरोर्भीतिमानंचापिविभावयन् ॥देवेरुष्टेगुरुस्त्राताnदेवोरोषितेगुरौ ॥२६॥ तस्माद्गुरौभक्तिमान्स्याद्देवादपिनरःसदा ॥मंत्राःफलंतितस्यैवनरकान्मुच्यतेहिसः ॥ २७ ॥ अहंप्राणामितस्यैवयस्यप्रीतोगुरुर्भवेत् ॥ गुरोरनंतरंमान्यायथा

ज्ञानंयथावयः ॥ २८ ॥ यथापुण्यंब्राह्मणाश्रमद्भक्तानीचवर्णकाः ॥ विनाप्रणामंपूज्यास्तेवर्गहीनाहि
मत्प्रियाः ॥ २९ ॥ सर्वदाप्रीतिमांस्तेषुस्याद्द्वेषंनैवकारयेत् ॥ नापायांचिंतयेत्तेषांगुणग्राहीभवेत्सदा ॥
॥३० ॥चतुर्थ्यांचैवसप्तम्यांत्रयोदश्यांविशेषतः ॥ प्रदोषइतिजानीयाद्गलग्रहमथोब्रुवे ॥ ३१ ॥ चतुर्द
श्याममायांचपौर्णमास्यांगलग्रहः ॥ गलग्रहेप्रदोषेचरात्रौनाध्ययनंचरेत् ॥३२॥ सर्वदैवप्रदोषःस्यात्सा
यंतन्यस्त्रिनाडिकाः ॥ चतुर्थ्यांयामआद्यःस्यात्सप्तम्यांसार्धयामकः ॥ ३३ ॥ निशीथेचत्रयोदश्यांप्र
दोषःपरिगृह्यते ॥ सूर्यास्तादर्धनाडींतुचतुर्थींवेधयेत्पुरा ॥ ३४ ॥ नाडीमेकांसप्तमीतुद्विनाडीस्तुत्रयोद
शी ॥ अनाध्यायतिथीनांतुनिर्णयंशृणुतत्वतः ॥ ३५ ॥ वृद्धासाम्येक्षयेप्रातस्त्रिचतुःपंचनाडिकाः ॥ ष
ट्चतुस्तिसृभिःसायमनध्यायतिथिर्भवेत् ॥ ३६ ॥ तदाभवेदनध्यायोनान्यथातुकथंचन ॥ आपौरुषे
यवाक्यानांवेदादीनांनियंस्थितिः ॥ ३७॥ पौरुषेयाणांवाक्यानाममापूर्णेप्रकीर्तिते॥अनध्यायास्ततस्तत्रसर्व
थाध्ययनंनहि ॥ ३८॥ कर्मोपयोगिमंत्राणांनानध्यायोस्तिकर्हिचित् ॥ अनध्यायःसर्वथास्याद्यदास्यादशु
चिःस्वयं ॥३९ ॥ देशोवाप्यशुचिर्यत्रजपस्तत्रहिपापभाक् ॥ अशुचिर्वाशुचिर्वापिजपेन्मन्नामसर्वदा ॥
॥ ४० ॥ तथैवस्मरणंकार्यंयतःसंशोधनंहितत् ॥ इतरेषांतुदेवानामृषीणांनाशुचिःपठेत् ॥ ४१ ॥
सहस्रनामस्तुत्यादिपुराणादौचभारते ॥ निबद्धंनजपेत्तद्वैमंत्ररूपंयतोहितत् ॥ ४२ ॥ पापानांहिपरं
श्रेष्ठंममविस्मरणंस्मृतं ॥ सर्वेषामपिपुण्यानांवरिष्ठंस्मरणंमम ॥ ४३ ॥ सुप्त्यादौसुप्तित्रिगमेकर्तेका

लेषुसर्वदा ॥ दुःखप्राप्तौसुखप्राप्तौगमनादौचलौकिके ॥ ४४ ॥ संकटेमहतिप्राप्तेमृत्युकालेविशेषतः॥
स्मरणंकीर्तनंमेस्यात्सर्वपापप्रणाशनं ॥ ४५ ॥ दुःखयन्नप्यहंभक्तान्हितंतेषांकरोम्यवै ॥ यथामातासु
तंदद्यादौषधंहितकारिणी ॥ ४६ ॥ अज्ञानात्तुसुतोवेत्तिमन्मातादुःखदायिनी ॥ महांतंदुःखनिचयंप
रिहर्तुंकरोमिवै ॥४७॥ दुःखंमद्भक्तनिचयेमद्भक्तिर्नवृथाभवेत् ॥ अभक्तानांतुकर्माणिचिरभाग्यानियानिच
॥ ४८ ॥ तानितेषांसुखंदत्वाशीघ्रमेवक्षयंनये ॥ कृतानांकर्मणांनाशोजायतेममभक्तितः ॥ ४९ ॥
प्रारब्धस्यननाशोस्तिसर्वथाभुज्यतेहितत् ॥ मद्द्वेषिणोपियत्कर्मदारुणंतपआदिकं ॥ ५० ॥ कुर्वंतितत्फ
लंतेषांददाम्येवतुसर्वथा ॥ तथैवममभक्तानांदारुणंपापसंचयं ॥ ५१ ॥ भोजयाम्येवतानद्धास्वल्पंदत्वा
पिदेवितत् ॥ प्रामाण्यायागमस्यैववैराग्यायचसंसृतेः ॥ ५२ ॥ ददामिदुःखंभक्तेभ्योनान्यथातद्धितं
भवेत् ॥ पूयशोणितमज्जास्थिविष्टाकृमिसमाकुले ॥ ५३ ॥ स्वदेहेपरदेहेचरमतेमानवोह्ययत् ॥
एकैकमपियत्रस्यादस्थिमांसादिकंचयत् ॥ ५४ ॥ सर्वेषांनिचयेतस्मिन्सौंदर्यमन्यतेनरः ॥ कांतेयं
सुंदरीमह्यंसानुरागमवेक्षते॥५५॥कदालिंगनमस्याःस्याच्चुंबनंमैथुनंतथा ॥ स्तनौहिपीवरौतस्याओष्ठौविद्रु
मसन्निभौ ॥ ५६ ॥ सुवर्णादधिकाकांतिश्चंद्रादप्यधिकंमुखं ॥ दाडिमीबिंबतुल्याश्चमाणिक्येनस
माअपि ॥ ५७ ॥ दृश्यंतेदशनायस्यामृगाक्षीकोकिलस्वना ॥ अर्धचंद्रनिभंयस्याललाटंकुंचितालकं
५८ ॥ विध्यतीवकटाक्षेपून्भ्रूवल्लिधनुषासकृत् ॥ गंडस्थलीशोभतेस्यास्ताटंकमणिकांतिभिः ॥ ५९ ॥

मुक्ताहारैश्चमालाभिर्भासतेस्याउरस्थलं ॥ त्रिवलीललितंचास्याउदरंनिम्ननाभिकं ॥६०॥ मध्यःकृशो स्यानितरांकांचीकिंकिणिसंयुतः ॥ अंगदेकंकणान्यस्याराजंतेकरयोर्भृशं ॥ ६१ ॥ मुद्रिकाभिःकथंह्य स्याअंगुल्याःसुमनोहराः ॥ माणिक्यानीवराजंतेनखान्यस्याअहोअहो ॥ ६२ ॥ नीवीबंधंकदामोक्ष्ये कदाद्रक्ष्यामितत्तनुं ॥ रंभास्तंभनिभावूरूजंघेमन्मथतूणकौ ॥ ६३ ॥ पद्मरागनिभौपार्ष्णीविमंतौरक्तदी धितीः ॥ पद्मादपिमृदूपादौकदाहृदिदधाम्यहं ॥ ६४ ॥ अहोपश्यतचित्राणिनखान्यस्यामुहुर्मुहुः ॥ मुंचंतिसततंयानिपद्मरागसमाःप्रभाः ॥ ६५ ॥ कथंगच्छतिकल्याणीमत्तहंसीवसर्वदा ॥ मृदून्यंगानिस र्वाणिमृणालानीवपश्यत ॥ ६६ ॥ अहोमनोहराकांतिरहोविद्युदिवप्रभा ॥ इतिध्यायतिचाख्यातिस्व सरवीभ्यःस्तवीतिच ॥ ६७ ॥ नारींदृष्ट्वादेवमायांमांसास्थ्यसृग्विनिर्मितां ॥ आदौतुदेहएवायमस्थि रोबुद्बुदोपमः ॥ ६८ ॥ तत्रापिदेहतारुण्यंविद्युद्वदवभासते ॥ चंदनागरुकर्पूरैःस्रग्वस्त्रकनकादिभिः ६९ भूषिताएवभासंतेतरुण्योपिचसर्वदा ॥ विकीर्णकबरींनग्नांमलिनांविकृताननां ॥ ७० ॥ तामेवदृष्ट्वा लोकोयंबिभेतिचजुगुप्सते ॥ नार्याअपिभवेदेवंदृष्ट्वासुंदरपूरुषं ॥ ७१ ॥ योनिःस्विद्यतिचैवास्याःक दैनंश्लेषयामितु ॥ अहोघनंवपुश्चास्यसुभ्रुवःपीनवक्षसः ॥ ७२ ॥ जीवच्छवंविलोक्यैषारज्यतेतत्रचा निशं ॥ नबिभेतिजनान्नारीनबिभेतिस्वकाद्धवात् ॥ ७३ ॥ स्वकीयंपुरुषंत्यक्त्वायत्परेणैवद्रोग्यति ॥ एवमेवधनेलुब्धोनपश्यतिमृतिंस्वकां ॥ ७४ ॥ म्रियंतेधनलोभेनवणिक्तस्करसेवकाः ॥ अन्यायेनधने

ल्छूनांमरणंनरकंतथा ॥ ७५ ॥ नपश्यतांविदधतांमांसशोणितचर्मणां ॥ निकायानांस्वदेहानांदेहसं
बंधिनामपि ॥ ७६ ॥ स्त्रीपुत्रपशुभृत्यानांपोषणंचंचलात्मनां ॥ जलबुद्बुदवन्नित्यंभस्मविट्कृमिसं
ज्ञितं ॥ ७७ ॥ श्वसृगालादिभक्ष्याणांपोषणंसततंनृणां ॥ वैराग्यंजायतेनैवकुर्वतांपितृतर्पणं ॥ ७८ ॥
पश्यतांम्रियमाणानिभूतानिस्वसमानिच ॥ दीर्यमाणानिशीर्णानिवृतानिकृमिकोटिभिः ॥ ७९ ॥ काक
कंदादिविहगैःकृष्यमाणानिसर्वतः ॥ जुगुप्सितंचानितरांनरैःपिहितनासिकैः ॥ ८० ॥ स्वदेहंपरदेहं
चनवद्वारैश्चसर्वदा ॥ स्रवंतंमलमूत्रंचरोमकूपैरनेकधा ॥ ८१ ॥ निर्मितंप्रथमंयत्तुस्त्रीरजोवीर्यमेलनात् ॥
अनिशंक्षाल्यमानंचस्रवतेचपुनःपुनः ॥ योनिद्वारेणजातंवैरुदंतंकोहमित्यपि ॥ ८२ ॥ एवंहिपश्यतांलोके
वैराग्यंनैवजायते ॥ संसारंबहुमन्यंतेनपश्यंत्यात्ममोक्षणं ॥ ८३ ॥ मूढात्मानोमन्यमानाआत्मानमज
रामरं ॥ पोषकंसर्वलोकानांनमांपश्यंतिकेचन ॥ ८४ ॥ ज्ञानिनोपिनपश्यंतिकिंपुनर्ज्ञानवर्जिताः ॥
अहोबतमहत्कष्टंवाणीयास्ववशातदा ॥ ८५ ॥ नकरोतिनरोमूढस्तयामन्नामकीर्तनं ॥ जिव्हैषाषड्र
सान्नित्यंवांछंतीभ्रामयत्यहो ॥ ८६ ॥ नकीर्तयतिचेन्नाममनसाखेदमर्हति ॥ स्वहितंनैवपश्यंतिमोहि
तामममायया ॥ ८७ ॥ मामेवयेप्रपद्यंतेमायामेतांतरंतिते ॥ धन्यातज्जननीलोकेतारितंचस्वकंकुलं ८८
यस्यमेजायतेभक्तिर्मद्भक्तानांचसंगतिः ॥ वंध्यैवश्रेयसीभार्यामदभक्तसुतानतु ॥ ८९ ॥ ममाभक्तोदेहे
ःपूर्वान्वंध्यायानतथाभवेत् ॥ भस्त्रावच्छ्वसितंतस्यस्नानपानंचकाकवत् ॥ ९० ॥ ममभक्तिविही

नस्यजीवनंचापिवृक्षवत् ॥ किंधनैरर्जितैस्तस्यकिंयज्ञैःसुकृतैरपि ॥ ९१ ॥ मद्भक्तिरत्नहीनस्य
किंदेवैःसमुपासितैः ॥ नाहितैर्मृत्युमर्त्येतिस्वानंदानुभवोनच ॥ ९२ ॥ नह्यनित्यंसुखंनृणां
चित्तस्वास्थ्यायकल्पते ॥ तस्यस्वास्थ्यविहीनस्यसुखंदुःखप्रदंहितत् ॥ ९३ ॥ असूययाभुज्य
मानंस्मर्यमाणंविशेषतः ॥ स्वकर्मनिर्मितान्देहान्भुक्त्वानानाविधयोनिजान् ॥ ९४ ॥ प्राप्तवान्मा
नुषंदेहंमुक्तिद्वारमपावृतं ॥ श्रेष्ठास्त्रैवर्णिकाश्चापितत्रापिब्राह्मणोवरः ॥ ९५ ॥ नयतेतात्ममोक्षायतमारू
ढच्युतंविदुः ॥ नृदेहोनौर्दृढाप्रोक्तागुरुनाविकसंयुता ॥ ९६ ॥ मयानुकूलवातेनप्रेर्यमाणाचवापुनः ॥
कृत्वामद्भक्तिमतुलांचातुर्मास्येविशेषतः ॥ ९७ ॥ प्रकाशितेज्ञानरवावज्ञानतमसःक्षये ॥ प्राप्नोतिमम
सारूप्यंपीतवासाश्चतुर्भुजः ॥ ९८ ॥ कामदेहःकामगमःकामभोगश्चकामदृक् ॥ मल्लोकेवसतेनि
त्यंपुनरावृत्तिवर्जितः ॥ ९९ ॥ यदिप्रमादान्नोयत्नंनृदेहंप्राप्यमुक्तये ॥ कुर्याद्दौपस्थजैह्व्येचेस्मिंश्छिश्नो
दरपरायणः ॥ १०० ॥ संसारेकुरुतेसक्तिमद्भक्तिंनैवयश्चरेत् ॥ चातुर्मास्येपिनोकुर्यान्मत्पूजांविधिनोदितां
॥ १०१ ॥ ज्ञानेपियत्नंनोकुर्यात्केवलंभोगलंपटः ॥ नतर्पयेत्ब्राह्मणान्वातेभ्यःपुण्यंनचार्जयेत् ॥
॥ १०२ ॥ स्वद्रव्येणस्वदेहेनतंविदुःस्वात्मघातिनं ॥ दुर्लभंप्राप्यजंतुर्वैजन्ममानुषमुत्तमं ॥ १०३ ॥
प्राप्यापिमांनसेवेतसपुनर्नरकेवसेत् ॥ सुचिरंनरकंभुक्त्वास्थावरेषुचजायते ॥ १०४ ॥ कृमिकीटा
दियोनीनांकोटिशःप्राप्यजायते ॥ श्वसूकरादिग्राम्येषुपशुष्वारण्यकेषुच ॥ १०५ ॥ क्रमात्किरातश

बरम्लेंछयोनिषुजायते ॥ ततःक्रमेणशूद्रत्वंततस्त्रैवर्णिकोभवेत् ॥ १०६ ॥ पुनस्तत्रापिचेत्कुर्याच्छिश्नो
दरपरायणः ॥ संसारेषुरतिंदविपुनःसनरकंव्रजेत् ॥ १०७ ॥ एवंभ्रमतिसंसारेयावज्ज्ञानंनजायते ॥
योतिकाम्यानिकर्माणिकुर्वाणःस्वर्गभाग्भवेत् ॥ १०८ ॥ सोपिस्वर्ग्यंकर्मभुक्त्वापुनर्भूमौप्रजायते ॥ मृत्यु
भीतिश्चयत्रास्तितत्सुखंनैवकीर्तितं ॥ १०९ ॥ शूलाग्रेरोप्यमाणस्यकामभोजनवृद्धिवत् ॥ लोकानां
लोकपालानांमद्भयंकल्पजीविनां ॥ ११० ॥ ब्रह्मणोपिभयंमत्तोद्विपरार्धपरायुषः ॥ प्रतिक्षणंक्षरत्ये
तत्पुण्यंस्वर्गेपिदेहिनां ॥ १११ ॥ बहुकालंभुक्तमपिसुखंस्वर्गेनतृप्तिकृत् ॥ असूयादूषितंतत्रभुक्तिका
लेपितत्सुखं ॥ ११२ यथैकपंक्तिभोक्तॄणांभिन्नभिन्नान्नभोजिनां ॥ हीनाशिनोभवेद्दुःखंस्वाद्वन्नमप्यसू
यया ॥ ११३ ॥ अतस्तस्मैयतेताशुयद्गत्वाननिवर्तते ॥ तन्ममैवपदंदेविज्ञानादेवतुलभ्यते ११४ ॥
मद्भक्त्यैवभवेज्ज्ञानंममभक्तैश्चसंगमः ॥ मन्मंत्रजपनेप्रीतिर्ममध्यानेममस्पृहा ॥ ११५ ॥ असूयानचतत्रा
स्तिनाहिपुण्यक्षयाद्भयं ॥ स्वरूपलाभसंतुष्टामोदंतेतत्रसर्वदा ॥ ११६ ॥ तस्माद्देविसदाकार्यं
चातर्मास्येविशेषतः ॥ इदंमाहात्म्यमालोक्यमत्पूजांतनुयान्नरः ॥ ११७ ॥ यथायथात्रकथितं
शक्यंकुर्यात्तथातथा ॥ माहात्म्यश्रवणात्पुंसांभक्तिस्तेजस्विनोभवेत् ॥ ११८ ॥ अतोमाहात्म्यश्रवणं
चातुर्मास्यात्पुरैवतु ॥ श्रुत्वाकुर्वीतमत्पूजांपुनश्चशृणुयादपि ॥ ११९ ॥ अतोरहस्यंसर्वेषांशास्त्राणा
मत्रकीर्तितं ॥ प्रीतयादेवितथ्यंवेदंभक्तानामपिशृण्वतां ॥ १२० ॥ मज्जतांदुस्तरांभोधौकृपयाकथयस्व

तान् ॥ इतितेकथितंदेविकिमन्यच्छ्रोतुमिच्छसि ॥ १२१ ॥ इतिश्रीवाराहपुराणेचातुर्मास्यमाहात्म्येअ
ष्टादशोऽध्यायः ॥ १८ ॥ धरण्युवाच ॥ चातुर्मास्येविशेषेणकानिपुण्यतमानितु ॥ दिनानितत्रकिं
कार्यमितिविस्तरतोवद ॥ १ ॥ ॥ श्रीवराहउवाच ॥ आषाढेपौर्णमास्यांतुमन्वादौ
तर्पयेत्पितॄन् ॥ वामनस्यतुपूजावैसम्यक्कार्यामुमुक्षुभिः ॥ २ ॥ ब्राह्मणान्भोजयेच्छक्त्यादद्या
च्चबहुदक्षिणां ॥ मेरुतुल्यंभवेत्तस्यस्नानदानादियत्कृतं ॥ ३ ॥ यदिचंद्रोपरागःस्याद्दैवात्तस्यांति
थांधरे ॥ ग्रहणात्पूर्वमेवत्रीन्यामान्हित्वातुभोजयेत् ॥ ४ ॥ ब्राह्मणांश्चततःकुर्यात्पुत्रवान्भोज
नंस्वयं ॥ अपुत्राविधवाचैवयतयोनैवभोजनं ॥ ५ ॥ कुर्वीरन्बालवृद्धाश्चगर्भिणीसूतिकादयः ॥ आ
तुराश्चैकयामात्प्राग्भुंजीरन्ग्रहणात्पुरा ॥ ६ ॥ ग्रस्तोदयेनकुर्वीतदिवसेजातुभोजनं ॥ मुक्तंदृष्ट्वापुनः
स्नात्वाब्राह्मणैःसहभोजनं ॥७॥ एकादश्यावमापूर्णाश्रवणंचेतिपंचकं ॥ विष्णुपंचकमित्युक्तंव्रतीतत्रो
पवासयेत् ॥८॥ ब्राह्मणान्भोजयेद्देवंवामनंचापिपूजयेत् ॥ घृतपायसपक्वान्नंशर्करानवनीतकं ॥९॥ भोज
नाद्यैर्दक्षिणाभिर्यथेष्टंतर्पयेद्द्विजान् ॥ पारणाहेप्रकुर्वीतशक्त्याब्राह्मणतर्पणं ॥ १० ॥ तदनंतफलंप्रोक्तंपरं
तुष्टिकरंमम ॥ ततस्तुश्रीधरंदेवमनिरुद्धादिपंचकं ॥११॥ पूर्वोक्तेनविधानेननवनीतादिभिर्जयेत् ॥ नंदा
दिषुक्रमेणैववित्तशाठ्यंनकारयेत् ॥ १२॥ ततोदर्शेप्रकुर्वीतपितृतृप्त्यर्थहेतवे ॥ नारायणंश्रीधरंचविधि
नैवप्रपूजयेत् ॥ १३ ॥ ब्राह्मणैःसहभुंजीतपृथक्पाकेनभक्तितः ॥ ततःकुर्वीतपंचम्यांनागानांपूजनंनरः॥

॥ १४ ॥ मत्पूजानंतरंशेषंवासुकिंतक्षकादिकान् ॥ पूजयेच्छर्कराक्षीरघृतपायसमोदकैः ॥ १५ ॥
साक्षात्संकर्षणात्माहंतांपूजांस्वयमाददे ॥ ब्राह्मणान्भोजयेत्पश्चाद्दद्याच्छक्त्याचदक्षिणाम् ॥ १६ ॥
पौर्णमास्यांततःकुर्यात्पवित्राणांसमर्पणं ॥ नानावर्णैःपट्टसूत्रैर्निर्मितानिसमर्पयेत् ॥ १७॥ पवित्राणित
तोदद्याद्दक्षिणाभिःसहैवतु ॥ ब्राह्मणेभ्यःस्वयंचापिभक्त्याकंठेथवाकरे ॥ १८ ॥ बिभृयाद्ब्राह्मणेभ्यश्च
दत्तंभवतिचाक्षयं ॥ भोजयेत्सुहृदश्चापिजातिश्रैष्ठ्यमवाप्नुयात् ॥ १९ ॥ सदास्यान्मंगलंतस्यइह
लोकपरत्रच ॥ ततःपरंहृषीकेशंयजेत्प्रतिपदादिषु ॥ २० ॥ ततोजन्माष्टमीपुण्याममातीवप्रिया
हिसा ॥ तस्यांनिशीथेकर्तव्यंकृष्णमूर्तेःप्रपूजनं ॥ २१ ॥ निशीथव्यापिनीयास्यात्सैवोपोष्याष्टमीभवे
त् ॥ दिनद्वयेनिशीथेचव्यापिनीस्याद्यदाष्टमी ॥ २२ ॥ पूर्वामुपोष्यकुर्वीतपरेद्युःपारणांनिशि ॥
नहिदोषस्तदाप्रोक्तोनिशीथोत्तरभोजने ॥ २३ ॥ रोहिण्यावाथसोमेनबुधेनाप्युत्तरातिथिः ॥ युक्ता
दापरदिनेप्रशस्तमुपवासनं ॥ २४ ॥दिनद्वयेयदानस्यान्निशीथव्यापिनीतिथिः ॥ तदोत्तरामुपवसेद्यतः
सूर्योदयस्पृशा ॥ २५ ॥ यांतिथिंसमनुप्राप्यउदयंयातिभास्करः ॥ सातिथिःसकलाज्ञेयादानाध्ययनक
र्मसु ॥ २६ ॥ इतिसामान्यतःप्रोक्तस्तिथीनांनिर्णयोबुधैः ॥ अलाभेतुविशेषस्यसामान्यंबलवत्स्मृतम् ॥
॥ २७ ॥ कर्मणोयस्ययःकालस्तत्कालव्यापिनीतिथिः ॥ याह्याहिसाविशेषेणतत्राधिक्येननिर्णयः ॥२८
द्विनाडीसंमितंप्रोक्तंमध्यरात्रादधःपरं ॥ दिनद्वयेष्टमीचेत्स्यात्तत्राप्याधिक्ययोगतः ॥ २९ ॥ पूर्वापरव्यव

स्थास्यात्साम्येपूर्वैवशस्यते ॥ रोहिण्याबुधसोमाभ्यांयुक्तास्वल्पापिगृह्यते ॥ ३० ॥ तदोत्तराप्रकर्तव्या निशीथेस्वल्पगापिया ॥ वारनक्षत्रयोगेननक्षत्रंबलवत्तरम् ॥ ३१ ॥ निशीथव्यापिनीपूर्वापरस्मिन्दिवसे यदि ॥ रोहिण्याबुधसोमाभ्यांत्याज्यान्योयानिशीथके ॥ ३२ ॥ तस्यांकृष्णंसमभ्यर्च्यनिशीथेविधिवन्नरः अपूपैर्नवनीताद्यैःशर्कराघृतसंयुतैः ॥ ३३ ॥ पारणाहेप्रकुर्वीतमन्वादिश्राद्धमुत्तमं ॥ पृथक्पाकेनवि प्रांश्चभोजयेद्दक्षिणास्ततः ॥ ३४ ॥ दत्वानत्वासमाप्नोतियज्ञकोटिसमंफलं ॥ कामधेन्वासवत्सायास्तथा नंदिगणस्यच ॥ ३५ ॥ अमायांपूजनकुर्यात्कृत्वाश्राद्धंयथाविधि ॥ पृथक्पाकेनकुर्वीतब्राह्मणानांच भोजनं ॥ ३६ ॥ शक्त्यादद्याद्दक्षिणाश्चसुहृदश्चापिभोजयेत् ॥ तेनप्रीताभवेत्तस्मैकामधुक्कामदोप्यहं ॥ ३७ ॥ तत.शुक्लचतुर्थ्यांतुपूजयेद्गणनायकं ॥ मोदकैःखाद्यभक्ष्यैश्चघृतपायसमिश्रितैः ॥ ३८ ॥ ब्राह्मणैःसहभुंजीतममनैवेद्यमुत्तमं ॥ ममैवसाभवेत्पूजाविश्वरूपस्यजाग्रतः ॥ ३९ ॥ जागृतंदैवतंविश्वं शब्दानांगणनायकं ॥ अतःसंपूजयेद्देवंमत्पूजानंतरंहितं ॥ ४० ॥ ततोनभस्यशुक्लायांदशम्यांनिशि भोजनं ॥ द्वादश्यांचापिनोकार्यममप्रीतिमभीप्सता ॥ ४१ ॥ यदास्याच्छ्रवणस्तस्यांद्वादश्यामपिभ क्तितः ॥ विष्णुंसंपूज्यगृह्णीयाद्व्रतंमत्प्रीतयेनरः ॥ ४२ ॥ दिनमानचतुर्थांशोयामइत्युच्यतेबुधैः ॥ याममात्रंभवेद्यातुपौर्णिमावैष्णवोनरः ॥ ४३ ॥ उपवासंततोन्यूनाघटिकानैवकारयेत् ॥ भूतविद्धां नोपवसेत्पौर्णमासीममामपि ४४ ॥ यदिशुद्धापूर्वदिनेचतुर्दश्यांनविद्यते ॥ सूर्योदयेतथाकुर्या

दुपावासंव्रतीनरः ॥ ४५ ॥ पौर्णमास्यप्यमावास्यापरस्मिन्दिवसेपुनः ॥ यदाभवेत्तदातांतुसम
तीत्यैवपारणं ॥ ४६ ॥ अमावास्यांकलामात्रमपिशिष्टामुपोषयेत् ॥ पूर्वेद्युर्यदिविद्धास्यात्तदातत्रैवलं
घनं ॥४७॥ उत्तरामिश्रिताश्रोणानैवोपोष्याव्रतेभवेत् ॥ नापिमध्याह्नतोन्यूनालंघनार्हाभवेद्व्रते ॥४८॥
अतोमध्याह्नगाग्राह्याविष्णुव्रतचिकीर्षुभिः ॥ उत्तरावेधरहितःश्रवणोद्वादशीयुतः ॥ ४९ ॥ व्याप्नो
तियदिमध्याह्नंकुर्यात्तस्यामुपोषणं ॥ श्रोणाचद्वादशीचापिमध्यान्हात्पूर्वमेवतु ॥ ५० ॥ खंडितास्या
त्तदानैवद्वादश्यामुपवासनं ॥ द्वादशींश्रुतिसंयुक्तामुपोष्यप्राप्नुयात्फलं ॥ ५१ ॥ द्वादशैकादशीतुल्यं
नकुर्याद्यद्युपोषणं ॥ द्वादशैकादशींहंतिनरकेमज्जतेचिरं ॥ ५२ ॥ ततोनंतचतुर्दश्यांरक्तसूत्रंप्रपूज
येत् ॥ चतुर्दशैववर्षाणिगृहीत्वाव्रतमुत्तमं ॥ ५३ ॥ अव्रतोपिप्रकुर्वीतदानंतस्यप्रपूजनं ॥ ब्राह्मणे
भ्यःप्रदातव्याअपूपाःसहदक्षिणाः ॥ ५४ ॥ भवेत्तदक्षयंपुण्यंपरंप्रीतिकरंमम ॥ अहमेवानं
तनामाकालःशेषःस्थितःसदा ॥ ५५ ॥ पूजांगृहीत्वाभक्तानांददामिफलमक्षयं ॥ उदयव्यापिनी
चेत्स्यात्ग्राह्यामुहूर्तगाभवेत् ॥ ५६ ॥ अन्यथैवत्रयोदश्यायुक्ताग्राह्यानचान्यथा ॥ पौर्णमास्यांततः
कुर्याच्छ्राद्धंनांदीमुखान्पितॄन् ॥ ५७ ॥ अच्छिन्नोपिभवेत्तस्यवंशस्तच्छ्राद्धकारिणः ॥ मासस्याधिपतिः
पूज्यःपद्मनाभोदृढव्रतैः ॥ ५८ ॥ क्रमेणैवानिरुद्धादिमूर्तिभिःपंचभिःसह ॥ तत्रषष्ठीभवेद्यातुरोहि
णीभौमसंयुता ॥ ५९ ॥ व्यतीपातयुतासास्यात्कपिलापुण्यवर्धिनी ॥ कदाचिल्लभतेसातुमनुष्यैरलजी

विभिः ॥ ६० ॥ अर्धोदयाच्छतगुणंतस्यांपुण्यंप्रकीर्तितं ॥ पौषेवामाघमासेवायावामास्यारवेर्दिने ॥
॥ ६१ ॥ श्रवणव्यतिपाताभ्यांयुक्तासार्धोदयःस्मृतः ॥ सूर्यग्रहणतःपुण्यंप्रोक्तंतत्रशताधिकं ॥ ६२ ॥ भवे
त्पुण्यसमृद्धीनामुदयोनुदयोद्विषां ॥ अर्धोदयइतिख्यातोदत्तस्याक्षयपुण्यदः ॥ ६३ ॥ जलंपिबातिदत्तं
चवर्णोपिकपिलोयतः ॥ अतःकपिलनामासौममरूपंरविःस्मृतः ॥ ६४ ॥ सएवदेवतातस्याःपूजनीया
हिभक्तितः ॥ ब्राह्मणेभ्यःप्रदातव्यंशक्तेरप्यधिकंधनं ॥ ६५ ॥ स्नानंदानंतथाहोमोयत्किंचित्पुण्यका
रकं ॥ तस्यांतुयत्कृतंदेवितदक्षय्यफलंस्मृतं ॥ ६६ ॥ मुहूर्तमपिलभ्येतेकपिलार्धोदयौनरैः ॥ तदैवसर्वं
कुर्वीतमनसोयद्यदीप्सितं ॥ ६७ ॥ त्रयोदश्यांततःकुर्यादशेषपितृतर्पणं ॥ पिंडदानेनजायंतेपितरः
प्रीतमानसाः ॥ ६८ ॥ श्राद्धाहेषुचसर्वेषुवरिष्ठासात्रयोदशी ॥ अतस्तस्यांकृतंश्राद्धमक्षय्यंपितॄ
णिदं ॥ ६९ ॥ शस्त्राग्निविषतोयाद्यैर्विद्युत्पातापमृत्युभिः ॥ येहतास्तेभ्यएवस्याच्चतुर्दश्यां
तुतर्पणं ॥ ७० ॥ अमावास्यातथातत्रपितॄणांतृप्तिकारिणी ॥ तस्यामपिकृतंश्राद्धमक्षय्यंपि
तृतृप्तिकम् ॥ ७१ ॥ अमावास्यासुसर्वासुश्रेष्ठापुण्यतमास्मृता ॥ रवींदुगुणयुक्ताचविशेषात्पु
ण्यदास्मृता ॥ ७२ ॥ पातःस्याद्ग्रहणंतस्यांवासरश्चरवेर्भवेत् ॥ कपिलाषष्ठितुल्यासाविशेषात्पु
ण्यवर्द्धिनी ॥ ७३ ॥ इषशुक्लप्रतिपदमारभ्यनवमीदिनं ॥ यावत्तावन्महापुण्यंदिनानांनवकंस्मृतं ॥ ७४
॥ तस्मिन्कस्यापिमंत्रस्ययांकांचिद्देवतांप्रति ॥ जपाद्यैःक्रियतेतस्मिन्सफलःसभवेद्ध्रुवं ॥ ७५ ॥ अ

न्यदायत्कृतंपुण्यंस्नानदानजपादिकं ॥ तस्मिंस्तुनवकेतस्याःसर्वलक्षणसंयुतं ॥ ७६ ॥ नरःकुर्वीतय
त्नेनफलंबहुगुणंभवेत् ॥ अतस्तदाविशेषेणस्नानदानजपादिकं ॥ ७७ ॥ महादानानिकुर्वीतनवम्यां
भक्तिमान्नरः ॥ तेषांकोटिगुणंपुण्यंतथैवदशमीदिने ॥ ७८ ॥ विजयादशमीप्रोक्तासापुण्याजयदा
नृणां ॥ राज्ञामेवजयस्तस्यांदातॄणांपातकस्यच ॥ ७९ ॥ विजयःस्यात्ततस्सानुमहापुण्यफलप्रदा ॥
कुर्वीतमंगलान्यस्यांसर्वदामंगलेप्सुना ॥ ८० ॥ द्रव्यैःसुगंधिभिस्तैलैर्मन्मूर्तीर्ब्राह्मणानपि ॥ स्नापये
त्तेनमहतीप्रीतिर्मेजायतेध्रुवं ॥ ८१ ॥ नवम्यैवयुताकार्याशुद्धावासर्वदाशुभा ॥ आश्विनस्यासितेपक्षे
चतुर्दश्यांविधूदये ॥ ८२ ॥ स्नातव्यंतिलतैलेननरैर्नरकभीरुभिः ॥ तदानींतुरमादेवीतत्रतिष्ठतिसर्वदा॥
॥ ८३ ॥ ततोनीराजनंतस्यांकुर्वीतविधिवन्नरः ॥ नकरोतिचयोमोहात्तस्यलक्ष्मीःप्रकुप्यति ॥ ८४ ॥
नरकश्चहतोदैत्यस्तिथौतस्यांततोहिसा ॥ ख्यातालोकेमहापुण्यानरकाख्याचतुर्दशी ॥ ८५ ॥ नहिव्रतं
विलुप्येतकार्तिकव्रतिनांनृणां ॥ विधवानांयतीनांचतस्यांतैलस्यसेवनात् ॥ ८६ ॥ यस्तुनकुरुतेतस्यां
तैलस्नानंविमूढधीः ॥ सप्तजन्मदरिद्रःस्यान्नारीचविधवाभवेत् ॥ ८७ ॥ तस्यांयःस्नापयेद्विप्रांस्तैले
नोष्णेनवारिणा ॥ तस्यगृहेसदालक्ष्मीर्भवेज्जन्मनिजन्मनि ॥ ८८ ॥ पितरस्तस्यमोदंतेतैलस्नानेनत
र्पिताः ॥ ततःपितॄन्समभ्यर्च्यदर्शश्राद्धंविधायच ॥ ८९ ॥ प्रतिपद्यपितैलेनप्रातःस्नायाद्बलेर्दिने ॥
पूर्वंबलिःस्वर्गराज्यंप्राप्तवान्रूपयामम ॥ ९० ॥ वरंचदत्तवानस्मैयोनरःप्रतिपद्दिने ॥ हर्षेणाप्यथरोषेण

दुःखेनाथसुखेनवा ॥ ९१ ॥ युक्तोवतिष्ठतेतद्वत्प्रायोवर्षक्रमेदसौ ॥ अतस्तत्रप्रकुर्वीतविशेषान्मंगलोदय
म् ॥ ९२ ॥ ब्राह्मणेभ्यस्तथादानंमहापुण्यफलप्रदं ॥ वस्त्राण्यश्वान्गजान्गाश्चरथान्दिव्यपरिच्छदान् ॥
॥ ९३ ॥ ब्राह्मणेभ्यःप्रदद्याच्चविविधानिधनानिच ॥ यथायथोत्सवस्तस्यांकुर्याद्भक्त्यानरोत्तमः ॥ ९४ ॥
तथातथाभवेत्तस्यउत्सवोजन्मजन्मनि ॥ ततःकार्तिकमासस्यद्वादश्यांपरमोत्सवं ॥ ९५ ॥ प्रातर्वि
धायकुर्वीतसायंदामोदरार्चनं ॥ तुलसीसन्निधौकृत्वापताकाध्वजशोभितं ॥ ९६ ॥ पुष्पमालासमा
कीर्णनानारत्नोपशोभितं ॥ शतशोघृतदीपैश्चपरितोदीप्ततांगतं ॥ ९७ ॥ मंडपंतत्रकुर्वीततोरणैरुपशो
भितं ॥ मुक्तादामभिराछन्नंरम्यसिंहासनेस्थितं ॥ ९८ ॥ पूजयेत्परयाभक्त्यापंचरात्रोक्तमार्गतः ॥ नवनी
तंदधिक्षीरंतथैवचघनंघृतं ॥ ९९ ॥ विविधैःखाद्यनैवेद्यैर्जलेनचसुगंधिना ॥ युक्तंनिवेदयेन्मह्यंतांबूलंसल
वंगकं ॥ १०० ॥ पुष्पाणिचविचित्राणिसुगंधीनिबहूनिच ॥ दक्षिणांचापिविविधंवदर्पयित्वादलैःशुभैः
॥ १ ॥ तुलस्यावाथधात्र्याश्चफलैश्चापिप्रपूजयेत् ॥ यथैवतुलसीसेव्यातथाधात्रीप्रकीर्तिता ॥ २ ॥
सप्तमीरविवाराभ्यांविनातांभक्षयेत्सदा ॥ नशाकव्रतहानिःस्यात्तस्याभक्षणतःक्वचित् ॥ ३ ॥ केश
दुष्टंभावदुष्टंयच्चान्यत्क्षुद्रदोषवत् ॥ अन्नंविशुद्धतामेतिधात्रीफलसमागमात् ॥ ४ ॥ यतःसामत्प्रियादेवी
ततोहंतिचपातकं ॥ तदर्पणेनमेप्रीतिर्जायतेदेविसर्वदा ॥ ५ ॥ ततोनीराजयेन्मांचलक्ष्मीसहितमीश्वरं
॥ गीतानामसहस्राभ्यांस्तवराजेनवापुनः ॥ ६ ॥ अनुस्मृत्यागजेंद्रस्यमोक्षणेनस्तुवीतमां ॥ सर्वस्तोत्र

समूहेभ्योवेदिकेभ्योपिमेप्रियं ॥ ७ ॥ पंचकंतेनमांनित्यंस्तुवीतानेनभक्तिमान् ॥ अथवाष्टशतंनाम्नांजपे
द्भक्तिसमन्वितः॥ ८॥ ततोगुरुंब्राह्मणांश्चमातापितृमुखानपि॥पूजयेत्परयाभक्त्यातेप्युक्ताममसूर्तयः॥ ९॥
मन्निवेदितशेषेणतेषांपूजांसमाचरेत् ॥ दक्षिणाखाद्यदानाद्यैस्ततोभार्यायुतःस्वय ॥ ११० ॥ सुहृ
द्भिःपुत्रपौत्राद्यैर्भृत्यैर्दीनैःसहैवतु ॥ मन्निवेदितमश्नियान्महोत्सवसमन्वितः ॥ ११ ॥ पौर्णमास्यांततः
कुर्यात्पुनःपूजनमीशितुः ॥ सापिपुण्यातिथिःप्रोक्ताचातुर्मास्यांतवर्तिनी ॥ १२ ॥ तस्यांयत्स्नानदा
नादितदप्यक्षय्यतांव्रजेत् ॥ इतितेसर्वमाख्यातंचातुर्मास्यविधायकं ॥ ११३ ॥ तवप्रीत्याधरेदेविकि
मन्यच्छ्रोतुमिच्छसि ॥ १४ ॥ ॥ इतिश्रीवाराहपुराणेचातुर्मास्यमाहात्म्येएकोनविंशोऽध्यायः ॥
॥ १९ ॥ ॥ धरण्युवाच ॥ ॥ श्रुतान्येतानिसर्वाणिशुभानिजगतःपते ॥ नाम्नामष्टशतंदिव्यं
श्रोतुंकौतूहलंहिमे ॥ १ ॥ ॥ श्रीवराहउवाच ॥ ॥ अयमेवपुराप्रश्नःकृतश्चंद्रार्धमौलिना ॥ नत
स्यापिमयाख्यातोरहस्यत्वाच्छुचिस्मिते ॥ २ ॥ त्वंचासिमत्प्रियादेविमद्भक्तामत्परायणा ॥ अतःसर्वा
च्चसर्वेशित्वंविशिष्टेतिमेमतिः ॥ ३ ॥ असंख्यानिविशालाक्षिममनामानितेध्रुवं ॥ सहस्राणितुमुख्या
नितेष्वप्यष्टशतानिच ॥ ४ ॥ तेभ्यश्चान्यानिनामानिमत्प्रियाणिनहिप्रिये ॥ तस्मात्तान्येववक्ष्यामित्व
य्यनुग्रहकाम्यया ॥ ५ ॥ सुनामाष्टशतस्यास्यदेवतामधुसूदनः ॥ ऋषिर्यज्ञवराहोहंछंदोनुष्टुप्प्रकी
र्तितः ॥ ६ ॥ नारायणोनरःशौरिश्चक्रपाणिर्जनार्दनः ॥ वासुदेवोजगद्योनिर्वामनोज्ञानपंजरः ॥ ७ ॥

श्रीवल्लभोजगन्नाथश्चतुर्मूर्तिश्चतुर्भुजः ॥ देवकेशोत्हृषीकेशःशंकरोगरुडध्वजः ॥ ८ ॥ नारसिंहोमहा
देवःस्वयंभूर्भुवनेश्वरः ॥ श्रीधरोदेवकीपुत्रःपार्थसारथिरच्युतः ॥ ९ ॥ शंखपाणिः परंज्योतिरात्म
ज्योतिरचंचलः ॥ श्रीवत्सांकोखिलाधारःसर्वलोकपतिःप्रभुः ॥१० ॥ त्रिविक्रमस्त्रिकालज्ञस्त्रिधामाक
रुणाकरः ॥ सर्वज्ञःसर्वगःसर्वःसर्वेशःसर्वसाक्षिकः ॥ ११ ॥ हयग्रीवोहरिःशार्ङ्गीहलीशेषोहलायुधः ॥
सहस्रबाहुरव्यक्तःसहस्राक्षोक्षरोक्षरः ॥ १२ ॥ गजेंद्रघ्नोगजार्तिघ्नःकेशवःकेशिमर्दनः ॥ कैटभारिरवि
द्यारिःकामदःकमलेक्षणः ॥ १३ ॥ कंसशत्रुरघशत्रुःकाकुत्स्थःखगवाहनः ॥ नीलांबुदद्युतिर्नित्योनि
त्यतृप्तोनिराश्रयः ॥ १४ ॥ नित्यानंदःसुराध्यक्षोनिर्विकल्पोनिरंजनः ॥ ब्रह्मण्यःपृथिवीनाथःपीतवा
सागुहाशयः ॥ १५ ॥ वेदगर्भोविभुर्विष्णुः श्रीमान्त्रैलोक्यभूषणः ॥ यज्ञमूर्तिरमेयात्मावरदोवासवा
नुजः ॥ १६ ॥ जितेंद्रियोजितक्रोधःसमदृष्टिःसनातनः॥ भक्तप्रियोजगत्पूज्यःपरमात्मासुरांतकः॥१७॥
अंतकःसर्वलोकानामनंतोऽनंतविक्रमः ॥ मायाधरोनिराधारोसर्वाधारोधराधरः ॥ १८ ॥ निष्कलंको
निराभासोनिष्प्रपंचोनिरामयः ॥ भक्तवश्योमहोदारःपुण्यकीर्तिःपुरातनः ॥ १९ ॥ इतित्रैलोक्यनाथ
स्यविष्णोर्ममवरानने ॥ नाम्नामष्टशतंदिव्यमशेषेणप्रकीर्तितं ॥ २० ॥ यःपठेच्छृणुयाद्वापिनित्यमे
तत्समाहितः ॥ सर्वान्कामानवाप्नोतिसर्वयज्ञफलंलभेत् ॥ २१॥सर्वदानेषुयत्पुण्यंसर्वतीर्थेषुयत्फलं ॥
तत्फलंलभतेधात्रिमयिभक्तिंचदुर्लभां ॥ २२ ॥ महापातकयुक्तोपिमांध्यात्वामधुसूदनं ॥ जपेदष्टशतं

नाम्नांतस्मात्पापात्प्रमुच्यते ॥ २३ ॥ अपुत्रोलभतेपुत्रमधनोधनवान्भवेत् ॥ आशांतिःशांतिमाप्नोति
मत्प्रसादान्नसंशयः ॥ २४ ॥ भूतवेतालसर्पाद्यायक्षगंधर्वराक्षसाः ॥ नश्यंतिस्मृतिमात्रेणनाम्नामष्टशत
स्यवै ॥ २५ ॥ मद्भक्तैर्मद्गतप्राणैर्मयिसंन्यस्तबुद्धिभिः ॥ स्तोत्रमेतद्विशेषेणपठितव्यंत्रिसंधिषु ॥
॥ २६ ॥ अचलमचलवर्णंवर्णरूपादिहीनंनिखिलनिगमगुह्यंगुह्यमेकंसुसूक्ष्मं ॥ अमलममलस
त्वादेविपश्यंतियेमांहृदयकमलमध्येजविमुक्ताभवंति ॥ २७ ॥ एवंदेविप्रकर्तव्यमाबाल्यादुत्तमंव्रतं ॥
नह्यत्रनिश्चयोनॄणांलोकरीतिंप्रपश्यतां ॥ २८ ॥ जरांवायौवनंवापिदेहोयद्रक्ष्यतिध्रुवं ॥ रक्तमांसास्थि
भिःकृत्तंविण्मूत्रादिप्रपूरितं ॥ गात्रंदृष्ट्वाविमूढोयमात्मानमजरामरं ॥ २९ ॥ मत्वाबाल्यस्वभावेनक्री
डादौलालस सदा ॥ पितृभ्यांतर्ज्यमानोपिनजानात्यात्मनोहितं ॥ ३० ॥ क्रीडासक्तोनजानातिगत
मायुर्निरर्थकं ॥ ३१ ॥ कथंचिद्दैवयोगेननाविदध्यात्स्वकंहितं ॥ तथापिमनुतेमूढोयौवनेहितमात्मनः
॥ ३२ ॥ यदायुवाभविष्यामिचरिष्यामिहितंतदा ॥ इतिनेत्रेनिमील्यासौयौवनंप्राप्यतेयदा ॥ ३३ ॥
तदासतरुणीसक्तोनानाभोगहतोनरः ॥ अन्यायेनमहाकष्टैर्भोगार्थंधनमर्जति ॥ ३४ ॥ क्षुरधाराविल
ग्नस्यमधुनःस्वादुमिच्छतः ॥ सुखदुःखेयथापुंसोजायेतेतद्वदत्रहि ॥ ३५ ॥ सुखंकंडूतिजन्मेवसुखं
मैथुनजंस्मृतं ॥ विरागोजायतेनैवदुःखैश्चैवाभिभूयते ॥ ३६ ॥ सुशीलायदिपत्नीस्यात्तदाकिंचित्सुखं
लभेत् ॥ दुःशीलासायदापुंसःसुखलेशोपिनोभवेत् ॥ ३७ ॥ यदाकदाचिज्जायेतविवेकःसंसृतिरिथ

तौ ॥ तदाचिंतयतेमूढोभोगैःकामंप्रशामये ॥ ३८ ॥ यदाजराप्रपद्येतचरिष्यामितदाहितं ॥ भोगस्त्री मधुतुल्याहिकामोवन्हिसमोनृणां ॥ ३९ ॥ आश्चर्यंयदयंभोगैःकामशांतिमभीप्सति ॥ विद्युत्तुल्येषु भोगेषुसक्तचेताविमूढधीः ॥ ४० ॥ अज्ञानांधितनेत्रोयंपश्यन्नपिनपश्यति ॥ जराव्याधिर्यदायातितदा पुत्रवशेस्थितः ॥ ४१ ॥ हीनेंद्रियगणोमूढोनचपश्यतिचक्षुषा ॥ नशृणोतिहरेर्नामतीर्थेगंतुंनशक्नुते ॥४२॥अवमानवचोभार्यानसहेतस्नुषातथा ॥ मरिष्यतिकदावृद्धस्त्रासमानादिवानिशं ॥ ४३ ॥ स्वप्तुंन शक्यतेरात्रौकासध्वानानिपीडितैः ॥ कफेनपूरितंपात्रंकतिवारंनयामहे ॥ ४४ ॥ पुत्राअप्यवमन्यंतेभू मिभारायतेवपुः ॥ भक्ष्यंभोज्यंपराधीनंवांछितंनैवलभ्यते ॥ ४५ ॥ यत्किंचिद्विवदेदेषलोकाउपहसंति तत् ॥ वृद्धत्वेनवराकस्त्वंकथंप्राप्नोतिलोलुपः ॥ ४६ ॥ लालायतेमुखंचास्यगुह्यंचापिप्रदृश्यते ॥ पश्यध्वमितिचान्योन्यंवदंत्युपहसंतिच ॥ ४७ ॥ केचित्पापाविनिघ्नंतिपितरंविपादेस्थितं ॥ केचिद्दुरुक्ति भिर्भूयःपीडयंतिसुताधमाः ॥ ४८ ॥ तदाकिंनुहितंस्वस्यचरिष्यातिविमूढधीः ॥ अतोबाल्यात्प्रभृत्येव माचरेत्स्वाहितंबुधः ॥ ४९ ॥ म्रियंतेशैशवेकेचित्केचिद्यौवनमागताः ॥ वायुबद्धेशरीरेस्मिन्नविश्वासो स्तिजीविते ॥ ५० ॥ वायुवच्चंचलंकिंचिज्जीवितंवायुयंत्रितं ॥ अहोमूढानजानंतितत्रापिस्थिरबुद्धयः ॥ ५१ ॥ येदृष्टाशैशवेचैवनतान्पश्यातियौवने ॥ यौवनेवीक्षितायेचतान्नपश्यतिवार्धके ॥ ५२ पृथिवी शीर्यतेसर्वामेरुश्चापिविदीर्यते ॥ शुष्यंतिसागराःसप्तशरीरेतत्रकातथा ॥ ५३ ॥ येप्रातस्तेनमध्यान्हेये

मध्यान्हेनतेनिशि ॥ येनिशायांनतेप्रातःकालोग्रासतिदेहिनः ॥ ५४ ॥ पल्वलस्थोयथामीनःपल्वला
युःप्रकीर्तितः ॥ मत्स्येभ्योधीवरेभ्यश्चसर्पेभ्यश्चबकादितः ॥ ५५ यदिजीवेत्तथापुंसःपरमायुर्जरावधि ॥
यदिजीवेद्दस्युसर्पव्याघ्ररोगादितःक्वचित् ॥ ५६ ॥ आमकुंभांबुसंस्थोपियथामीनोभिमन्यते ॥ समुद्रे
संस्थितोस्मीतितथायुर्मनुतेनरः ॥ ५७ ॥ आत्मानंमनुतेमूढोविमृत्युंविजरंसदा ॥ क्षणैःक्षणैर्हृतेतोयेशु
ष्ककुंभेयथातिमिः ॥ ५८ ॥ तापेनविहितांगःसयथालुंठतिमूढधीः ॥ सहसैवतथामृत्यौसंप्राप्तेदीन
धीरयं ॥ ५९ ॥ धनंमेतनयामेद्यप्रियायोषिद्गृहाणिमे ॥ पशवश्चगजाश्वामेसाश्रुनेत्रेमुहुर्मुहुः ॥६० ॥
इत्थंगद्गदयावाचाभिषजंप्रार्थयत्यपि ॥ तवपुत्रोभविष्यामितातजीवयमांतव ॥ ६१ ॥ दास्यामिवि
पुलंवित्तंजीवामिचकथंवद ॥ इत्थंरोरूयमाणोपिम्रियतेचबिडालवत् ॥ ६२ ॥ एवंज्ञात्वाहिदेहे
स्मिन्स्थिरबुद्धिर्विमूढधीः ॥ पश्यंतिस्वहितंनैवनिमग्नोविषयांबुधौ ॥ ६३ ॥ तस्माद्देविसदाका
र्यंस्वोचितंकर्मसर्वदा ॥ सर्वदेवादिदेवोहंपूजनीयश्चसर्वदा ॥ ६४ ॥ चातुर्मास्येविशेषेणपुंसास्व
हितमिच्छता ॥ कर्मणामनसावाचायथाशक्तिधनेनच ॥ ६५ ॥ धनेनधनिनापूज्योतपसानिर्धनेनच ॥
धनिनापियथाशक्तितपसाविष्णुरिज्यतां ॥ ६६ ॥ निर्धनेनापिपूज्योहंयथाशक्तिधनेनच ॥ उपवासा
दिकंयत्तुपीडकंदेहचित्तयोः ॥ ६७ ॥ एतदेवहितंप्रोक्तंश्रुतिस्मृत्याविरोधियत् ॥ नह्यलभ्यंभवेत्किंचि
द्दानेनतपसाथवा ॥ तस्माद्ध्यंनरैःकार्यंयेत्रस्युःस्वहितेच्छवः ॥ ६८ ॥ ॥ इतिश्रीवाराहपुराणेचातु

र्मास्यमाहात्म्येविंशोऽध्यायः ॥ २० ॥ ॥ धरण्युवाच ॥ दानंविप्रायदातव्यमित्युक्तंहित्वयाच्यु
त ॥ कथंकस्मैप्रदातव्यंनदत्तंर्योदिकिंततः ॥ १ ॥ इतिमह्यंसमाचक्ष्वदयायदिभवेन्मयि ॥ श्रीवराहउ
वाच ॥ अन्नस्यक्षुधितंपात्रंपानीयस्यपिपासितम् ॥ २ ॥ नहिजातिविवेकोत्रकर्तव्यःपुण्यमिच्छता ॥
परलोकेप्सुनाकिंचिद्दीयतेयद्धनादिकं ॥ ३ ॥ वासांस्यश्वागजाहेमगृथरत्नधनादिकं ॥ विप्रायैवचदा
तव्यमक्षय्यफलमिच्छता ॥ ४ ॥ यावंत्योदेवतावेदेसंस्तुताःसर्वशोपिताः ॥ वसंतिविप्रगात्रेषुतस्मात्पू
ज्यतमोहिसः ॥ ५ ॥ ब्राह्मणःपात्रभूतोहिभ्रजेद्यस्यगृहंप्रति ॥ पितरोदेवताश्चैवसहतेनैवयांतिच ॥
॥ ६ ॥ नाभेरधस्तात्पितरोनाभेरूर्ध्वंचदेवताः ॥ पाद्यासनादिनानाभेर्यदधःप्रीणयंतितं ॥ ७ ॥ ते
नस्युःपितरस्तृप्तास्ततआवाहनादिभिः॥नाभेरूर्ध्वंप्रीणयंतिप्रीताःस्युर्देवतास्ततः ॥ ८ ॥ तत्रयोनाचरेन्मो
हान्मदाद्वातेनरोषिताः ॥ देवावापितरोवापिउभयेवाशपंतितम् ॥ ९ ॥ तच्छापाग्निर्दहेदस्यपुण्यरा
शिपुरार्जितं ॥ पापंविप्रगतंवापिततस्तस्मिन्विशेदपि ॥ १० ॥ अतःपुण्यस्यवृद्ध्यर्थंतथापापक्षयाय
च ॥ पूजनीयंसदापात्रंस्वगेहेयदुपागतं ॥ ११ ॥ दानेनप्रीणयेत्तत्रयोगेनाप्यधिकेनवा ॥ दानं
हिद्विविधंप्रोक्तमयोग्यंयोग्यमेववा ॥ १२ ॥ देशकालाश्रयंपात्रंस्वशक्तिमनुचिंत्यतु ॥ भक्त्यायद्दीयतेदानंत
द्योग्यमितिकीर्तितं ॥ १३ ॥ तेनास्यपुण्यवृद्धिःस्याद्दातुःपापक्षयोपिच ॥ अयोग्यंद्विविधंप्रोक्तमाधिकं
न्यूनमेवच ॥ १४ ॥ देशादिकंस्वशक्तिंचयदातिक्रम्यदीयते ॥ भक्त्यापात्रेऽधिकंतत्स्यादधिकंतेनजाय

ते ॥ १५ ॥ भूयात्पापक्षयःपुण्यवृद्धिरप्यधिकाभवेत् ॥ बहुपुण्यंभवेत्क्षीणंतेनापात्रगतंहिवै ॥ १६ ॥
अयोग्यंनततोदानेविप्रोयत्नंसमाचरेत् ॥ स्वस्यपुण्यक्षयस्तेनभूयान्भवतिवैयतः ॥ १७ ॥ स्वोपजो
विनिविप्रादावधिकंयत्तुदीयते ॥ तद्योग्यमेवंमतव्यंयोग्यंस्याद्न्यूनमेवतत् ॥ १८ ॥ स्वाश्रितेषुततःकु
र्यादधिकंतत्समंभवेत् ॥ देशकालाश्रयंपात्रंस्वशक्तिमनुचिंत्यच ॥ १९ ॥ ततोयद्दीयतेन्यूनंतद्न्यूनमि
तिकीर्तितं ॥ अवमानेनरोषेणदुर्वाक्यान्यथवावदन् ॥ २० ॥ योग्यंवाप्यधिकंवापिदद्यात्तन्निष्फलंभ
वेत् ॥ योग्यंलब्ध्वापरंतुष्येद्विप्रोदातुःशिवंभवेत् ॥ २१ ॥ नयातितेनसंतोषंसविप्रःपापभाग्भवेत् ॥
परावृत्यतुयांदद्याद्योग्यंदातुर्धनंपुनः ॥ २२ ॥ वृथारोषेणतेनस्यात्स्वपुण्यस्यतुसंक्षयः ॥ अन्यस्मैतद्ध
नदेयंनतत्स्थाप्यंस्वकेगृहे ॥ २३ ॥ विप्ररोषाग्निसंतप्तंदातुःपुण्यधनंदहेत् ॥ दद्याद्न्यूनंतुयोविप्रेसदा
तापापभाग्भवेत् ॥ २४ ॥ पात्रावमानजंपापंनाशयेत्पुण्यसंचयं ॥ गृण्हीयाद्यदितद्विप्रोनपुण्यंतस्यही
यते ॥ २५ ॥ पुण्यमेवमयालब्धमितिमत्वैवतद्धनं ॥ गृण्हीयान्नत्यजेत्प्राज्ञःपुण्यभाक्पापनिर्वृतिः
॥ २६ ॥ यदित्यजेद्धनंदत्तंरुष्टोविप्रोगृहेधनम् ॥ ज्वलदंगारसदृशंपुण्यराशिंधनानिच ॥ २६ ॥ दहेद्दातुर्न
संदेहोपापवृद्धिंकरोतिच ॥ नान्यस्मैतद्धनंदद्यात्स्पर्शनात्तस्यदोषभाक् ॥ २८ ॥ ऋणीतस्यभवेद्दातान
रकंप्रतिपद्यते ॥ ब्रह्मस्वहरणाद्दोषाद्दरिद्रश्चापिजायते ॥ २९ ॥ नविषंविषमित्याहुर्ब्रह्मस्वंविषमुच्य
ते ॥ विषमेकाकिनंहंतिब्रह्मस्वंपुत्रपौत्रकम् ॥ ३० ॥ गृहागमनमात्रेणशुल्कंदातरिजायते ॥ तच्छुल्क

मेवब्रह्मस्वंदद्याद्दोषापनुत्तये ॥ ३१ ॥ कश्चित्कस्यापिनोगेहंव्रजेच्छुल्कार्थनंविना ॥ शुल्कंदत्त्वैवमुच्य
तगृहीनैवान्यथाक्वचित् ॥ ३२ ॥ अर्थिनोयद्यदिष्टंस्यात्तत्तच्छुल्कमितीरितं ॥ विप्रादीनांतुयच्छुल्कंयस्योप
रिहियद्भवेत् ॥ ३३ ॥ सत्यांशक्तौनवितरेत्ततस्तद्दणवान्भवेत् ॥ ब्राह्मणोभ्येत्यभग्नाशोगृहात्प्रतिनिव
र्तते ॥ ३४ ॥ सतस्मैदुष्कृतंदत्वापुण्यमादायगच्छति ॥ वापीकूपतडागादौगतंपात्रंजलाशये ॥ ३५ ॥
नहिरिक्तंसमायातिविप्रपात्रंतथास्मृतम् ॥ गतंहिगृहिणोगेहंनाहिरिक्तंबहिर्व्रजेत् ॥ ३६ ॥ धनंवाप्यथ
वापुण्यंसमादायैवगच्छति ॥ अतःसपुण्यरक्षार्थयोग्यंदानंद्विजेऽर्पयेत् ॥ ३७ ॥ यावद्वेलंगृहेयातिदातु
रर्थीयदृच्छया ॥ तावद्वेलंभवेच्छुल्कंवर्धतेनात्रसंशयः ॥ ३८ ॥ क्लेशयित्वार्पितंयत्तुशुल्कंतन्नैवपुण्य
दम् ॥ तच्छुल्कादधिकंयत्स्यात्तद्दानंपरिकीर्तितम् ॥ ३९ ॥ ब्राह्मणोग्निसमोह्येषज्वालाभिःपंचभिर्यु
तः ॥ पादयोर्वागुपस्थेचहृदयेत्वचितादधत् ॥ ४० ॥ यात्येषगृहिणोगेहंदृष्ट्वैनंसवदेद्यदा ॥ भगव
न्स्वागतंकुत्रवासस्तेकिंत्वमिच्छसि ॥ ४१ ॥ इदमासनमादत्स्वनिविश्यकृपयावद ॥ तदावाचिस्थिता
ज्वालातस्यशाम्यतिनान्यथा ॥ ४२ ॥ यदापादौक्षालयतिवंदतेचपुनःपुनः ॥ तदापादस्थिताज्वालात
स्यशाम्यतिनान्यथा ॥ ४३ ॥ यदायस्यगृहेविप्रःसुखेननयतेदिनम् ॥ तदोपस्थगताज्वालातस्यशाम्य
तिनान्यथा ॥ ४४ ॥ चंदनाद्युपचारैश्चतालवृंतानिलैरपि ॥ अलंकारैश्चवसनैर्यदाप्रीणातिवैतदा ॥
॥ ४५ ॥ त्वचिस्थितामहाज्वालातस्यशाम्यतिनान्यथा ॥ अन्नपानादिभिर्द्रव्यैर्यदाप्रीणात्यमुंगृही ॥

॥४६॥ हृदिस्थितातदाज्वालानस्यशाम्यतिनान्यथा ॥ शांतज्वालःसुसंतुष्टोद्विजोयस्यगृहेवसेत् ॥ ४७॥
स्वर्गोजयोबलंराज्यंप्रजावित्तंविवर्धते ॥ विपरीतेविनश्यंतिवदत्यर्थमिमंश्रुतिः ॥ ४८ ॥ स्वहितंनेवपश्यं
तिमोहेनांधितचक्षुषः ॥ तेषांहितंपरीप्सन्हिविप्रान्संतोषयाम्यहम् ॥ ४९ ॥ यथाग्निर्गृहिणांगेहेहर
त्यहरहर्धनम् ॥ तदेवशिष्यतेयद्धिकृपयाकृष्यतेऽर्थिभिः ॥ ५० ॥ अर्थिभ्योनाभ्यसूयेतनकुध्येतापिक
र्हिचित् ॥ नावमन्येतचक्कापियतस्तेसुहृदःपराः ॥ ५१ ॥ यश्चस्याद्धनवान्लोकेसएवप्रार्थ्यतेद्विजैः ॥
यदाहिफलवान्वृक्षस्तदैवसेव्यतेऽर्थिभिः ॥ ५२ ॥ पाषाणैर्लगुडैर्वापिशाखाच्छेदादिनापिवा ॥ फल
वानेवयोवृक्षःसलोकेपीड्यतेजनैः ॥ ५३ ॥ नहिशुष्कस्तथावृक्षस्तडागोवापिसेव्यते ॥ तथादरिद्रोम
नुजोनेक्ष्यतेस्वजनैरपि ॥ ५४ ॥ महापातकिवल्लोकेदरिद्रस्त्यज्यतेजनैः ॥ नविश्वसंतिपश्यंतितन्मुखं
स्वजनाअपि ॥ ५५ ॥ नभाषतेतथाप्रोक्तोमहापातकिनासमः ॥ यदीश्वरेणमेदत्तंधनंधान्यादिकंततः
॥ ५६ ॥ आयांतिमद्गृहंविप्रानान्यथेतिमुहुर्मुहुः ॥ संपत्तिश्चंचलानित्यंकतिकत्यनयाहताः ॥ ५७ ॥
नत्यक्ताःकतिवालोकेनस्पृष्टाःकतिचिन्नवा ॥ ममभाग्यंकियन्मात्रंदेहश्चापिकियान्मम ॥ ५८ ॥ इ
त्यादिचिंतयन्नेवपूजयेदर्थिनंसदा ॥ नस्त्रियोनसुताश्चापिपशुभृत्यादयःकिमु ॥ ५९ ॥ हितंनैवप्रकु
र्वंतियथार्थीकामपूरितः ॥ अल्पेनैवतुतुष्यंतिब्राह्मणानतथापरे ॥ ६० ॥ सहस्रगुणितेनापिनतुष्यंति
सुतादयः ॥ प्रकुर्वीतततःपात्रेदानंशक्त्यनुसारतः ॥ ६१ ॥ अर्थिमात्रंभवेत्पात्रंतत्रापिब्राह्मणोवरः ॥

तत्रापिवेदसंस्कारीततोप्यध्यापकोवरः ॥ ६२ ॥ ततोपिज्ञानवान्प्रोक्तस्ततोज्ञानोपदेशकः ॥ उक्तएत्र
विवेकस्तेपात्राणांपुरतोमया ॥ ६३ ॥ ज्ञानाधिक्येनपात्रत्वंपुण्याधिक्येनवापुनः ॥ पुण्याधिक्येवि
वेकस्तुपुरस्तात्प्रोक्तएवते ॥ ६४ ॥ ज्ञानाधिक्यंपरीक्षेतस्वयंचेज्ज्ञानवान्भवेत् ॥ अथत्रासाधु
भिर्विप्रैर्ज्ञानिभिर्वापरिक्षयेत् ॥ ६५ ॥ सर्वेषामेवपुण्यानांदानपुण्यंमहत्स्मृतम् ॥ अतः
सर्वप्रयत्नेनसुखेप्सुर्दानमाचरेत् ॥ ६६ ॥ भक्त्यायद्दीयतेपात्रेयथाशक्त्याधनादिकम् ॥
तद्दानमितिविज्ञेयंपात्रमक्लेशयन्नृभिः ॥ ६७ ॥ देशकालानुसारेणतत्स्यात्पुण्यप्रदंबहु ॥ तस्माद्दानं
सदाकार्यमात्मनःक्लेशमुक्तये ॥ ६८॥ अत्रतेपूर्ववृत्तांतंवर्णयिष्यामिसुंदरि ॥ अस्तिपुण्यतमंलोकेक्षेत्रंवारा
णसीतिवै ॥ ६९ ॥ तत्रशूद्रःशंबुकोभूद्दरिद्रोदीर्घरोगवान् ॥ मृतापत्यास्त्रियासार्धंपीड्यमान क्षुधाभृशं
॥ ७० ॥ पत्नीतमवदद्दीनारुदंतीक्षुत्प्रपीडिता ॥ जीर्णनवस्त्रखंडेनशतछिद्रेणवैपुनः ॥ ७१ ॥ छा
दयंतीस्वजघनंकृष्यमाणार्भकेनच ॥ भृशंक्षुधापीडितेनभक्ष्यवस्त्रविहीनया ॥ ७२ ॥ ततस्तथाविधंदुः
खमनुभूयपतिंसती ॥ उवाचगद्गदंदेविजलपूर्णेक्षणामुहुः ॥ ७३ ॥ कथंमयाप्रकर्तव्यंभक्ष्यवस्त्रविही
नया ॥ आकृष्यमाणयाभ्यर्थंबालकेनबुभुक्षता ॥ ७४ ॥ पश्यंत्यात्मदशांदीनांदुःखंसोढुंनशक्यते ॥
पतिंविपत्तिसंयुक्तंत्यक्त्वान्यंपतिमाश्रयेत् ॥ ७५ ॥ सानारीरौरवेदुःखंभोक्ष्यतीतिमयाश्रुतम् ॥ अतस्त्वा
मीदृशावस्थापन्नंत्यक्तुंनचोत्सहे ॥ ७६ ॥ नोत्सहेचभृशंदुःखंसोढुंदारिद्र्यसंभवं ॥ अंन्नंहिदेहिनांप्राण

॥५३॥

स्तद्विनाजीवनंनाहि ॥ ७७ ॥ पीडातत्राधिकास्वामिन्नसोढुंशक्यतेमया ॥ अतोहंसंप्रवेक्ष्यामिजलंब
ध्वागलेशिलां ॥ ७८ ॥ निधायसरितस्तीरेरुदंतंबालकंसखे ॥ कृपयाकोपिगृह्णीयान्मातृहीनंदयान्वि
तः ॥ ७९ ॥ पोषयेदपिवाकश्चित्ततोजीवतुवानवा ॥ वंदेत्वच्चरणौयामिप्रविशामिसरिद्वरां ॥ ८० ॥
श्रीवराहउवाच ॥ श्रुत्वावाचंतथापत्न्याःशंबूकोदीनमानसः ॥ स्वबाहुंतद्गलेक्षिप्त्वाचुक्रोशभृशदुःखि
तः ॥ ८१ ॥ रुदतोरुभयोस्तत्रबालकोपिरुरोदह ॥ अभूदार्तस्वरस्तत्रशृण्वतांरोमहर्षणः ॥ ८२ ॥ दु
द्रुवुश्चनरानार्योहृष्ट्वातान्दुःखितांश्चते ॥ पप्रच्छुर्मिलिताःसर्वेशंबूकस्तानथाब्रवीत् ॥ ८३ ॥ स्वदुःख
कारणंसर्वंततश्चैवाब्रवीत्पुनः ॥ अस्माकमेककालीनंभक्ष्यंसंपत्स्यतेयदि ॥ ८४ ॥ ततोवयंवनंगत्वा
काष्ठान्यानीयशक्तितः ॥ विक्रीयतानितेनैवकरिष्यामोत्रजीविकां ॥ ८५ ॥ श्रीवराहउवाच ॥ तत
स्तद्वचनंश्रुत्वागौतमीब्राह्मणीसती ॥ एकपुत्राभर्तृहीनादयालुर्ब्रह्मचारिणी ॥ ८६ ॥ पुत्रानुमत्यातंप्रा
हशंबूकैहिममालयं ॥ सपत्नीपुत्रकस्यास्यददाम्यन्नमहंतव ॥ ८७ ॥ भुक्त्वाश्वस्तनमप्यन्नंपृथक्दास्या
मिपुत्रक ॥ तद्गृहीत्वावनंयाहिश्वःप्रातस्त्वंस्त्रियासह ॥८८॥ काष्ठाहारेणजीवत्वमुत्तिष्ठोत्तिष्ठमाशुचः ॥
श्रीवराहउवाच ॥ यथोक्तंसातथाचक्रेगौतमीदययान्विता॥८९ ॥ शंबूकोपिययौप्रातर्वनंकाष्ठाजिहीर्षया
॥ निबध्यपृष्ठतोबालमन्नमादायमस्तके ॥ ९० ॥ रज्जुंगृहीत्वाहस्ताभ्यांपत्नीशंबुकमन्वगात् ॥ दंपती
तौवनंगत्वाकाष्ठान्याहार्यशक्तितः ॥ ९१ ॥ अन्नंभुक्त्वाजलंपीत्वाचक्रतुर्भारकद्वयम् ॥ निधायशिरसो

भारंपरस्परमतःपरं ॥ ९२ ॥ मध्याह्नेययतुस्तौतुनिदाघेतप्तगात्रकौ ॥ शुष्यन्मुखौतृषार्तौतुदूराध्वानम
तीत्यतु ॥ ९३ ॥ अन्नवंतौतदेच्छंतौजलंछायांभृशंमुहुः ॥ ततोरण्येवृक्षमेकंघनच्छायमपश्यतां ॥ ९४
तृषितावेवतांछायांसमाश्रित्यचतस्थतुः ॥ उत्तार्यभारंतौतत्रबालमुन्मुच्यपृष्ठतः ॥ ९५ ॥ सांत्वयित्वा
सुषुपतुर्निधायहृदिबालकं ॥ स्वेदधारापरिक्लिन्नौमृताविवनिपेततुः ॥ ९६ ॥ यदृच्छयातत्रमुनिर्गाल
वःशिष्यसंवृतः ॥ निदाघतप्तकायौतौसुप्तौक्लेशेनभूयसा ॥ ९७ ॥ दृष्ट्वादयान्वितोविप्रःकमंडलुजलं
ततः ॥ तेभ्यःप्रादाच्छंवुकस्तुगालवंप्रणिपत्यच ॥ ९८ ॥ उवाचकिंमयाब्रह्मन्दुष्कृतंचरितंपुरा ॥ य
तोहमीदृशंदुःखंभुंजेपत्न्यासहार्भकः ॥ ९९ ॥ कथंचदुःखनिर्वाणंममस्यात्पापिनःकदा ॥ शरणंत्वां
प्रपन्नोस्मित्राहिनोदुःखसागरात् ॥ १०० ॥ गालवउवाच ॥ सुदासोनामवैश्योभूद्विदेहनगरेपुरा ॥
धनवान्शीलसंपन्नःपत्नीद्वयसमन्वितः ॥ १ ॥ कनिष्ठायांस्त्रियांसक्तोदुद्रोहज्येष्टयोषितम् ॥
कुरुतेस्मवृथाकोपंप्रहरत्यपिवैवृथा ॥ २ ॥ ऋतुस्नातांनयातिस्मवृथाभिशपतिस्मह ॥ अ
धिकारंजहारास्याःकनिष्ठामेवमन्यते ॥ ३ ॥ ददातिवस्त्रंमालिनंरुक्षमन्नंददातिच ॥ वचने
कुप्यतेचास्याःसदाचैवावमन्यते ॥ ४ ॥ भुंजेतसाचलब्धान्नंदेवतागृहवासिनो ॥ परिचर्या
पराह्यासीत्सदासानियमव्रता ॥ ५ ॥ रंगवल्यानमस्कारैर्दीपदानैःप्रदक्षिणैः ॥ आयुष्यंसार्थकं
चक्रेवंध्यारूपवतीसती ॥ ६ ॥ ऋतुस्नातांकदाचित्तांसुदासःस्पर्शमातनोत् ॥ तेनैवगार्भिणीसाभूत्पुत्रो

प्य।सीत्सुलक्षणः ॥ ७ ॥ कनिष्ठारोषमापेदेहंतुमैच्छत्सुतंनुतं ॥ सागृहीत्वाततःपुत्रं जगामस्वपितुर्गृहं
॥ ८ ॥ भ्रातृभिर्मानिताचासीद्वर्धयंतीस्वकंसुतं ॥ ववृधेसोचिरेणाथनाम्नानंदकइत्यसौ ॥ ९ ॥ धनवा
न्पुण्यवान्लोकभार्यावान्मातृसंयुतः ॥ महावणिगभूल्लोकेज्ञातिश्रेष्ठोबभूवह ॥ १० ॥ अथकालेनम
हतासुदासंसहभार्यकं ॥ दस्यवोनकमभ्येत्यताडयित्वामुहुर्मुहुः ॥ ११ ॥ हृतवंतोधनंसर्वंसुदासोभूद्द
रिद्रकः ॥ वार्धकेनचशोकेनचक्षुर्हीनोभवत्पुनः ॥ १२ ॥ पत्न्याकनिष्ठयासार्धंक्षुधार्तोभैक्ष्यमाचरन् ॥
स्वग्रामेलज्जयानैवभैक्ष्यंशक्यंहियाचितुं ॥ १३ ॥ अतोग्रामांतरंगच्छंस्ततोपिग्राममुत्तरं ॥ गच्छन्नेवंस
हिग्रामोयत्राभून्नंदकःसुतः ॥ १४ ॥ भिक्षार्थंपर्यटन्सोथस्वपुत्रगृहमागमत् ॥ ज्येष्ठयाभार्ययादृष्टोदी
नांधोभार्ययासह ॥ १५ ॥ प्रत्यभिज्ञायस्वपतिंसपत्नींचततःपरं ॥ ननामपादौसाभर्तुःसपत्नींसस्व
जेपिच ॥ स्वपुत्रेणनमस्कार्यस्वासनेतौन्यवशयत् ॥ १६ ॥ तयोःशुश्रूषणंचक्रेसपुत्रालज्जनानयोः ॥
कालेकालेचमिष्टान्नंसुवस्त्रंशयनंशुभं ॥ १७ ॥ दत्त्वापरिचचारैवसासतीतौदिनेदिने ॥ अथ
कालेनमहतासुदासोरागवानभूत् ॥ १८ ॥ कामिभिःसुपरीतांगोमुमूर्षुरभवद्द्रुतं ॥ नंदकस्यगृहेरात्रौब्रा
ह्मणास्तुसमागताः ॥ १९ ॥ तेषांचपश्यतामेवप्रोक्ष्यमाणोजलेनतैः ॥ ममाराथचकारास्यनंदकोह्यौर्ध्व
देहिकं ॥ २० ॥ अचिरेणैवकालेनकनिष्ठापिममारच ॥ तेनपुण्यप्रभावेननंदकश्चेदिराडभूत् ॥ २१ ॥
सुबाहुरितिविख्यातःसुदाम्नोनृपतेःसुतः ॥ तत्रापितस्यसैवाभून्मातावैवरवर्णिनी ॥ २२ ॥ ब्राह्मणानां

दर्शनेनतज्जलस्पर्शननेच ॥ सुदासोब्राह्मणोह्यासीद्विष्णुशर्माभिधस्ततः ॥ २३ ॥ कनिष्ठातस्यभार्यायास्
सैवाभूदन्यजन्मनि ॥ भार्यापीडनपापेनदारिद्र्यंपरमंगतः ॥ २४ ॥ पठ्यमानोपिबहुशोवेदोनायातित
न्मुखे ॥ ततोवैराग्यमापन्नोदारिद्र्येणातिपीडितः ॥ २५ ॥ सुदुष्करंतपश्चक्रेसभार्योनर्मदातटे ॥
जरठःसममाराथपत्नीचानुजगामतं ॥ २६ ॥ धनंबहुतरंमेस्यादितिवासनयामृतः ॥ अथसधनदोना
म्नावैश्यदेहमवाप्तवान् ॥ २७ ॥ महाधनपतिश्चासीद्वसन्माहिष्मतीपुरे ॥ तत्रापितस्यभार्यासीत्पूर्व
जन्मनियाभवत् ॥ २८ ॥ सददौनचविप्रेभ्योधनंकिंचित्कदाचन ॥ दुर्वचोश्रावयच्चापिब्राह्मणेभ्योयथे
ष्टतः ॥ २९ ॥ अवमेनेगृहंगंतृन्ब्राह्मणान्भार्ययासह ॥ युवासुरूपसंपन्नोभार्ययासहनित्यदा ॥ ३०॥
भुंजानोविविधान्भोगान्स्वहितंनैवदृष्टवान् ॥ एकदासभामध्येतिष्ठन्धनवतांकाचित् ॥ ३१ ॥ ब्रा
ह्मणःप्रार्थयामासमुकुंदोमथुरागतः ॥ धनंकन्याविवाहाययाचमानोमुहुर्मुहुः ॥ ३२ ॥ तोषितोन्यैःसध
निभिर्धनदानेनशंबुक ॥ धनदोनददौतस्मैकिंचित्स्वीयंधनंतदा ॥ ३३ ॥ अन्येषांलज्जयातत्रउवाच
चतदाद्विजं ॥ मद्गृहंत्वंसमागच्छकिंचिद्दास्यामितेधनं ॥ ३४ ॥ मुकुंदस्तस्यवचनाज्जगामधनलिप्स
या ॥ धनदस्यगृहंसोस्मैनैवकिंचित्प्रदत्तवान् ॥ ३५ ॥ बभाषेदुर्वचश्चापिगच्छमूढोसिभिक्षुक ॥ किमर्थंकृत
वान्संगंस्त्रियासाकंमदान्वितः ॥ ३६ ॥ स्वसुखार्थस्त्रियंगत्वाजनयित्वाचकन्यकां ॥ कुतोस्मांस्त्वंविवा
हार्थंबाधसेधनयाञ्चया ॥ ३७ ॥ इत्यादिबहुधाविप्रमुपहास्यप्रकुप्यच ॥ नादात्किमपिविप्रायतस्मैधन

मुदाहृतं ॥ ३८ ॥ ततःकालेनमहताचंद्रशर्माद्विजोत्तमः ॥ मायापुरीनिवासीचद्दर्शनगरेस्थितं॥ ३९॥
धनिकंतंतुविज्ञायधनंयाचितवान्द्विजः ॥ तस्मैसदैवयोगेनपादनिष्कंसमर्पयत् ॥ ४० ॥ तदल्पमितिम
त्वाचहेलयादत्तमेवच ॥ क्रुद्धोविप्रोत्यजत्तत्तुपुनस्तस्यसमीपतः ॥ ४१ ॥ धनदःपुनरादायतद्ध
नंस्वगृहेक्षिपत् ॥ अहोममाभवल्लाभोदत्तंविप्रेपुनर्धनं ॥ ४२ ॥ लब्धंदैवेनेतिवदन्नक्षमापितवान्द्विजं ।
ज्वलदंगारतुल्यंतद्विप्रक्रोधाग्निदीपितं ॥ ४३ ॥ ददाहतद्धनंसर्वंशनैरग्निरिवज्वलन् ॥ लाभेच्छयातुय
द्यस्मैतेनदत्तंधनंबहु ॥ ४४ ॥ तत्तेनैवहतंनैवपरावृत्यसलब्धवान् ॥ यद्यद्वस्तुस्वलाभायक्रीतवान्धन
दस्तुयः ॥ ४५ ॥ तद्वस्तुन्हियतेचौरैरर्थोवातद्विशीर्यते ॥ पूर्यतेस्यापियत्किंचित्समर्घवाततोभवत् ॥
॥ ४६ एवंक्षणिधनःसोभूत्सभार्यःपुत्रवर्जितः ॥ प्राप्तवांश्चमहत्कष्टंनिर्जगामततःपरं ॥ ४७ ॥ वने
गच्छन्परिश्रांतस्तृषितोभार्ययासह ॥ वृक्षमेकंसमाश्रित्यतत्रस्थौघर्मनिपीडितः ॥ ४८ ॥ जलमन्वेषयं
स्तत्रदृष्टवान्कुंडमद्भुतं ॥ जलनिर्झरसंयुक्तंतत्रागात्संकमंडलुः ॥ ४९ ॥ दैवात्तत्रागमद्व्याघ्रःक्षुधितो
जगृहेभृशं ॥ प्रियेहतोस्मिव्याघ्रेणतृषितःक्षुधितोपिच ॥ ५० ॥ दीनांत्वांविजनेरण्येपाययिष्यतिकोज
लं ॥ हाहतोस्मिहतोस्मीतिविलपंतंमुहुर्मुहुः ॥ ५१ ॥ चखादनिर्दयोव्याघ्रःपत्नीशुश्रावतद्वचः ॥
जगामचव्याघ्रदेशंयत्रासौपातितःपतिः ॥ ५२ ॥ मामाशुभक्षव्याघ्रत्वंनहिजीवितुमुत्सहे ॥ तृषितास्व
जनैर्हीनाविजनेस्मिन्पतिंविना ॥ ५३ ॥ इत्याक्रोशत्यपिमुहुर्व्याघ्रस्तृप्तोनचाहनत् ॥ जगामान्यंत

तदेशंसातत्रानिपसादह ॥ ५४ ॥ भुक्तशेषंपतेर्देहंनिधायांकेरुरोदह ॥ अहोधनदमेकांतकुतोरुष्टोसि
मेवद ॥ ५५ ॥ कथंचतृषितांमांत्वंनपाययसिवैजलं ॥ चंदनागरुकर्पूरैःसुवस्त्रैर्भूषणैरपि ॥ ५६ ॥ अलं
कृतामिमंदेहंपश्यामिर्गावरोक्षितं ॥ अयिकामुककासित्वंनालिंगसिनचुंबसि ॥५७॥ नहादृगःकादाचि
त्तरोषआसीन्ममोपरि ॥ तथात्वंसेव्यमानापिनैवकिंचित्प्रभाषसे ॥ ५८ ॥ अहोदैवंपराकर्तुंशक्यतेनै
वकेनचित् ॥ क्वासौधनदनामावैक्वसामाहिष्मतीपुरी ॥ ५९ ॥ क्वचास्मिन्विजनेरण्येव्याघ्रान्मरणमी
दृशं ॥ एवंविलप्यबहुधानिःश्वसंतीमुहुर्मुहुः॥६०॥ पतिदेहंहृदिन्यस्यगिरिशृंगात्पपातह ॥सत्वंगंतुक
जातोसिभार्यासैवात्रसंगता ॥६१॥ धननदत्तमन्यस्मैततोदारिद्र्यमाप्तवान् ॥ विप्रावमाननाच्चापिदोर्घरोगे
णपीडितः ॥ ६२ ॥ यस्मात्प्रतिश्रुतंविप्रेनदत्तंतेनतेसुताः ॥ उत्पद्यंतेविलीयंतेविप्ररोषाग्निनाहताः ॥
॥ ६३ ॥ विप्रोपहासनाद्दोषात्कुष्टीभूतंचतेमुखं ॥ ६४ ॥ विप्रत्यक्तंवनंयत्त्वंगृहेस्थापितवान्पुनः ॥ नच
क्षमापितोविप्रोनरोषस्तस्यसंहृतः ॥ ६५ ॥ तेनदोषेणमहताकार्यघातोभिजायते ॥ हस्तप्राप्तमपिधनं
दृश्यमानंविनश्यति ॥ ६६ ॥ उद्यमोप्यर्थतामेतितस्माच्छंबुकदोषतः ॥ अत्रापितंनलभ्येतयथावीजंत
थाधनं ॥६७॥ नदत्तंनैवलभ्येतयथोप्तंलभ्यतेतथा ॥ नैवोप्तंनैवलभ्येतविषादःकिंनिबंधनः ॥६८॥ द्वा
रेद्वारेभ्रमंतीमेभिक्षुकाःपात्रपाणयः ॥ कथयंतीवलोकानामदातुःफलमीदृशं ॥६९ ॥ नहिदानात्परंकिं
चिद्विद्यतेवैचराचरे ॥ भक्त्यादेयंह्रियादेयंभीत्यादेयमितिश्रुतिः ॥७०॥ अतःपरहितंतेयत्कथयिष्यामि

तच्छृणु ॥ मत्कमंडलुतोयेनमंत्रपूतेनशंबुक ॥ ७१ ॥ पतितेनभवतोदेहःपावितोनाखिलादघात् ॥ रोगमुक्तोय
जातस्त्वंशक्तिश्चापिभविष्यति ॥ ७२ ॥ जीविष्यतिसुतोयंतेचिरंमज्जलपानतः ॥ भार्यापितवशक्तास्यादि
तिविद्धिसुनिश्चितं ॥ ७३ ॥ दिनेदिनेवनंयाहिकाष्ठानिभार्ययासह ॥ आहृत्यविक्रीयधनंस्नात्वागंगाजलेततः
॥ ७४ ॥ तुर्यांशंदेहिविप्रायत्रिभिरंशैःस्वजीविकां ॥ विदेहितेनपूर्तिःस्याद्युष्माकमुदरार्चिषां ॥ ७५ ॥ षष्टिर्व
र्षाणिकुर्वीथायावद्देहःपतेत्तव ॥ गंगातीरेत्वयासाकंपत्नीतवमरिष्यति ॥ ७६ ॥ ततस्त्वंब्राह्मणोभूत्वाध
नवान्देहपारगः ॥ अयंचतेसुतस्तत्रजन्मनिस्यात्सुतस्तव ॥ ७७ ॥ भविष्यतिचपत्नीयंतवपत्नीच
शंबुक ॥ ममानुग्रहयोगेनपूर्वजन्मस्मृतिस्तव ॥ ७८ ॥ भविष्यतिनसंदेहोमद्वचस्तत्रवैस्मर ॥ अर्थि
नंब्राह्मणंवीक्ष्यपरांमुदमवाप्नुहि ॥ ७९ ॥ अयंमेतारकःसाक्षादीश्वरेणप्रचोदितः ॥ दययातेनदास्यामिवां
छितंशक्तितोधिकं ॥ ८० ॥ अहोदयालुर्भगवान्यतोमेदत्तवान्धनं ॥ ततएवहिमांविप्रायाचंतेधनमीहितं
॥ ८१ नदरिद्रगृहेयांतिभिक्षुकाःस्वर्गदायकाः ॥ नहिशुष्कंसरोयांतिमृगावापक्षिणोपिवा ॥ ८२ ॥ ई
शमेदेहिवसुधाधनंयद्यद्विवांछितं ॥ पीडयंत्यर्थिनोमह्यंयथाहिफलितंतरुं ॥ ८३ ॥ मत्तोबलाधिकाह्येते
तथाज्ञानाधिकाअपि ॥ सुवंशजाइमेमत्तोहंसपादादिभिर्दृढाः ॥ ८४ ॥ याचंतेयद्धनंमह्यंचाटुवाक्यैः
स्तुवंतिच ॥ सतवानुग्रहःस्वामिन्नान्यथेत्थंक्वचिद्भवेत् ॥ ८५ ॥ यतोमह्यंधनंदत्तंहरिणात्रकृपालुना ॥ स्व
र्गलोकात्ययेचापिप्रेषयत्यर्थिनोद्विजान् ॥ ८६ ॥ अहंतस्यानुग्रहंतंशिरस्याधायभक्तिमान् ॥ तोषयिष्या

मिसततंब्राह्मणान्शक्तितोधिकं ॥८७॥ व्ययाग्निर्मद्रूहेनित्यंदहत्यहरहर्धनं ॥ कर्षतिरूपयैवेमेस्तोकंस्तो कंधनंद्विजाः ॥ ८८ ॥ इदमेवचपाथेयंगच्छतोभवसागरे ॥ ममस्यान्नैवचान्यत्स्यात्पाथेयंनात्रसंशयः ॥ ८९ ॥ अर्थीहिपरमंमित्रंभाग्येनैवेहलभ्यते ॥ नसुतोनैवपत्नीस्यान्नभृत्योनैववासुहृत् ॥ ९० ॥ शक्तःस्याद्रक्षितुंतत्रयथार्थीतोषितोधनैः ॥ अर्थीहिपरमःशत्रुर्योहिकोपवशंगतः ॥९१॥ देशांतरगतोजी वेच्छत्रुणापीडितोनरः ॥ अर्थिकोपहतोयस्तुनेहामुत्रसुखंलभेत् ॥ ९२ ॥ पुत्रोगृण्हातिनोदत्तंस्त्रीगृण्हा तिददातिच ॥ सुहृद्भृत्योथवान्योपिगृहीतंनैवयच्छति ॥९३॥ इदंतुपरमंचित्रंस्तोकमप्यर्थिनेऽर्पितं ॥ कालेकालेददात्येनंकृत्वाकोटिगुणंहरिः ॥ ९४॥ गर्भवासेषुसर्वेषुसर्वास्वपिचयोनिषु ॥ वार्धकेचाथवा ल्येवाप्राप्तेवाप्राणसंकटे ॥ ९५॥ हरिर्दत्तेकोटिगुणंपूर्वंदत्तधनस्यहि ॥ मूर्खाराज्यंप्रकुर्वंतिकाणाःखंजा श्चकुष्ठिनः ॥ ९६ ॥ जातिहीनाश्चपापाश्चविरूपाविकलांगकाः ॥ बालाश्चरोगिणश्चैवदृश्यंतेधनभा गिनः ॥ ९७ ॥ ज्ञानिनश्चसुरूपाश्चयुवानोबलिनोदृढाः ॥ पुण्यात्मानोमहावंशाअहोपरिचरंतितान् ॥ ९८ ॥ ताड्यंतेबहुशकैश्चदीनास्तेचाटुवादिनः ॥ भर्त्स्यंतेचापिबहुशस्तर्ज्यंतेधनिभिर्मुहुः ॥ ९९॥ अहोधनस्यमाहात्म्यंवर्णितुंशक्यतेकथं ॥ हन्यमानाहीनबलैःक्रोशंतिबलिनोभृशं ॥ २०० ॥ धनमे वबलंपुंसांनज्ञानंनापिवाग्बलं ॥ नशौर्यंनापिवाजातिर्नशीलंसौहृदंनच ॥ १ ॥ तादृशंतुधनंनॄणलां भ्यंदानेननान्यथा ॥ अतोबलानांसर्वेषांदानंहिपरमंबलं ॥ २ ॥ दानेनैवतुलभ्यंतेपुरुषार्थाश्चसर्वशः ॥

यशःकीर्तिश्चदानेनलोकेभवतिनान्यथा ॥ ३ ॥ नज्ञानेननपुण्येनशौर्येणयशसापिवा ॥ अर्थोनलभ्य
तेयोहिसतुदानेनलभ्यते ॥ ४ ॥ इतिमद्वचनंनित्यंस्मरन्जन्मनिजन्मनि ॥ कुरुदानंभवेत्तेनसिद्धंसर्वं
समीहितं ॥ ५॥ उत्तिष्ठयाहिस्वग्रामंविषादंमुंचशंबुक ॥ ममवाक्यानुसारेणवर्तेथाइहजन्मनि ॥ ६ ॥
तेनतेभवितासर्वंयद्यद्वांछसिवैहृदि ॥ ॥ श्रीवराहउवाच ॥ ॥ गालवस्यवचःश्रुत्वाशंबुकोहृष्टमा
नसः ॥ ७ प्रणनामसपत्नीकःसाष्टांगंदंडवन्मुहुः ॥ ततःकाष्ठान्युपादायजगामस्वगृहंप्रति ॥ ८ ॥
ततआरभ्यचक्रेसगालवोयद्यदुक्तवान् ॥ षष्टिर्वर्षाणितस्यायुरेवमाचरतःसदा ॥ ममारजान्हवीतीरेभा
र्याप्यनुजगामतं ॥ २०९ ॥ इतिश्रीवाराहपुराणेचातुर्मास्यमाहात्म्येएकविंशोध्यायः ॥ २१ ॥ ॥
श्रीवराहउवाच ॥ अत्यद्भुतमिदंदेविशृणुष्वावहितामम ॥ यदासीच्छंबुकेकाश्यांवसमानेमहात्मनि
॥ १ ॥ अवंतिनगरेरम्येतत्रासीद्ब्राह्मणोधनी ॥ कपिलोभार्गवस्तस्यसुशीलासीद्वरांगना ॥ २ ॥ अतीव
धनलुब्धोभूत्सविप्रोधनवानपि ॥ याजनंभैक्ष्यचारंचकुसीदंकुर्वतानिशं ॥ ३ ॥ धनमर्जितवान्भूरिस्तो
कंकिंचित्कदापिन ॥ दत्तवान्ब्राह्मणेदानंनचाश्नातिस्वयंतदा ॥ ४ ॥ सदापरान्नभोक्तासीत्स्वगृहेकर्हि
चिद्यदि ॥ सायंरुक्षंकदान्नंसभुंक्तेद्रविणलोभतः ॥ ५ ॥ पित्रोःश्राद्धदिनेप्राप्तेग्रामांतरमगाद्धिसः ॥
प्रातरारभ्यसोगच्छत्सायमायातिनित्यदा ॥ गृहेतस्यातिथिर्नैवकर्हिचिद्भुक्तवान्धरे ॥ ६ ॥ भार्यासु
शीलातद्भीत्यानादाद्भिक्षांचभिक्षवे ॥ यथारुचिस्वयंसातुभर्तुराज्ञानुसारतः ॥ ७ ॥ बुभुजेभक्ष्यभोज्या

निवासंस्यपिदधारच ॥ हरिसेवापरानित्यंतुलसीसन्निधौतुसा ॥ ८ ॥ प्रदक्षिणानमस्कारैरंगवल्यादि सेवनैः ॥ अवंध्यंदिवसंचक्रेसन्निधौवैष्णवालये ॥ ९ ॥ हरिपूजांपश्यतिस्मशुश्रावचहरेःकथां ॥ ब्राह्मणेभ्योदातुमिच्छातस्यायद्युपजायते ॥ १० ॥ भर्तुर्भीत्यानाशकत्सादातुंविप्रायकिंचन ॥ कदा चित्तुनिदाघार्तःपर्णादोनामवैद्विजः ॥ ११ ॥ वेदवेदार्थतत्वज्ञोदरिद्रोधनलिप्सया ॥ अटमानोथदैवे नमध्याह्नेगृहमागतः ॥ १२ ॥ तंदृष्ट्वापरयाभक्त्यासुशीलार्घ्यादिभिर्द्विजं ॥ पूजयामासपश्चात्सात मुवाचयशस्विनी ॥ १३ ॥ नजानातियथाभर्तामामविप्रबहिर्गतः ॥ तथाकुरुष्वमद्गेहेभोजनंदययामम ॥ १४ ॥ क्षुधितोसिनशक्नोमिविनातृप्तिंविसर्जितुं ॥ श्रीवराहउवाच ॥ तस्यास्तद्वचनंश्रुत्वापर्णादो हृष्टमानसः ॥ १५ ॥ सद्मनःपश्चिमेभागेपाकमन्नस्यकृतवान् ॥ यद्यदिष्टंभवेद्विप्रतत्तद्याचस्वमांमुहुः॥ ॥ १६ ॥ नहिशंकाप्रकर्तव्याविप्रभक्तास्म्यहंतव ॥ इतितस्यावचःश्रुत्वापर्णादोहर्षितोभवत् ॥ १७ ॥ यथेष्टंभुक्तवंतंतंपीतवंतंजलंशुचि ॥ विश्रांतंपरिपप्रच्छसुशीलातंद्विजोत्तमं ॥ १८ ॥ किमर्थमटसि ब्रह्मन्निदाघेघोरदर्शने ॥ किंलब्ध्वाकृतकृत्यस्त्वंभविष्यसिवदस्वतत् ॥ १९ ॥ तस्यास्तद्वचनंश्रुत्वाप र्णादस्तामुवाचह ॥ वेदाध्ययनकामोहंतथावेदार्थवाचने ॥ २० ॥ उत्कंठामहतीमेस्तिदारिद्र्येणा तिपीडितः ॥ यदिद्वादशवर्षाणिनिर्वाहंप्राप्नुयामहं ॥ २१ ॥ तदैवकृतकृत्यःस्यांसत्यमेतद्ब्रवीमिते ॥ इतिश्रुत्वावचस्तस्यपर्णादस्यमहात्मनः॥२२॥चिंतयित्वासुशीलासाप्रोवाचद्विजपुंगवं ॥ द्रव्यागारमिदं

चास्तिप्रविश्यास्मिन्निर्विशंकिनः ॥ २३ ॥ यथेष्टं द्रव्यमादत्स्व गच्छ पर्णाद माचिरं ॥ ततोहृष्टमनाविप्रोविवेशधनसद्मतत् ॥ २४ ॥ ग्रहीतुमुद्यतोयावत्तावत्सर्पोन्ववारयत् ॥ क्रुद्धंब्राह्मणमालोक्यशापभीतोभुजंगमः ॥ २५ ॥ मनुष्यवाचातंप्राहक्षमस्वद्विजसत्तम ॥ कुबेरयक्षैरत्राहंस्थापितोस्मिगृहेचिरं ॥ २६ ॥ कपिलस्यधनंनेदंसुशीलायाश्चवाद्विज ॥ धनमेतच्छंबुकस्यकाश्यांदानंप्रकुर्वतः ॥ २७ ॥ काष्ठविक्रयलब्धस्यप्रत्यहंस्वधनस्यच ॥ तुर्यांशोदीयतेयेनभक्त्याविप्रायधीमते ॥ २८ ॥ विद्धितस्यधनंविप्रयदीच्छातेत्रविद्यते गच्छतंप्रतिशीघ्रंत्वंतंयाचस्वमहाधनं ॥ २९ ॥ तदाज्ञयायथेष्टत्वंगृहीत्वेदंधनंव्रज ॥ इत्याश्चर्यंवचस्तस्यशुश्रावभुजगस्यसः ॥ ३० ॥ सुशीलाप्यशृणोत्तत्तुसंतप्तामानसेभवत् ॥ प्रोवाचदीनयावाचापर्णादंभितिविस्मिता ॥ ३१ ॥ अयिविप्रनमस्तुभ्यंशीघ्रंकाशींव्रजाधुना ॥ यथामेसर्पवाक्येस्मिन्विश्वासोभाविताध्रुवं ॥ ३२ ॥ तथाविधस्त्वरत्वंचापिकृतकृत्योभविष्यसि ॥ इतितस्यावचःश्रुत्वापर्णादःशीघ्रमाययौ ॥ ३३ ॥ पुरींवाराणसींयत्रधर्मात्मास्तेसशंबुकः ॥ विज्ञायलोकमुखतस्तंददर्शद्विजोत्तमः ॥ ३४ ॥ आत्माभिमुखमायांतंपर्णादंवीक्ष्यशंबुकः ॥ अभिगम्यनमश्चक्रेपूजयन्स्वागतादिना ॥ ३५ ॥ तद्दिनेलब्धद्रव्यस्यतुर्यांशंदातुमुद्यतं ॥ पर्णादःप्राहतंदेविशंबुकंधर्मतत्परः ॥ ३६ ॥ पर्णादउवाच ॥ अहंपांचालदेशीयोविप्रोदारिद्र्यपीडितः ॥ दूरात्त्वत्कीर्तिमाश्रुत्यप्राप्तवानितिविद्धिमां ३७ ॥ ॥ शंबुकउवाच ॥ विप्रशांतोसिनितरांमंदभाग्यस्यमेकृते ॥ किंकरोमिनपश्यामिधनंत्वत्तोषकारणं ॥ ३८ ॥ तस्मादद्यत

नंद्रव्यंसर्वंत्वंमेगृहाणभो ॥ अनुगृह्णीष्वविप्रेंद्रकुरुष्वचदयांमयि ॥ ३९ ॥ इतिश्रुत्वावचस्तस्यपर्णा
दःप्रहसन्निव ॥ नैतदर्थमिहायातोबहुवित्तंतवास्तिच ॥ ४० ॥ तन्मध्येभारमात्रंमेसुवर्णयच्छशंबुक ॥
जलोत्सर्गविधस्त्वत्वंततोहंयामिनान्यथा ॥ ४१ ॥ यत्रस्यात्तेधनंतत्रग्रहीष्यामिनसंशयः ॥ माकुरुष्वा
त्रसंदेहंममवाक्यंयथार्थकं ॥ ४२ ॥ अत्यद्भुतमिदंज्ञात्वाहसन्नेवतुशंबुकः ॥ भारंसंकल्पयामासहेम्नस्तस्मै
द्विजन्मने ॥ ४३ ॥ ततःप्रणम्यभूयस्तंपर्णादंशंबुकोब्रवीत् ॥ उपहासमिवेदंमेकृतवानसिभातिमे ॥
॥ ४४ ॥ अतःसत्यंवदस्वात्रयेनमेसंशयोनुदेत् ॥ पर्णादस्तमथप्राहयथावृत्तंपुराहितत् ॥ ४५ ॥ शं
बुकोहृष्टमनसापर्णादंनिरयातयत् ॥ ततोवंतींसमभ्येत्यपर्णादःसकलंहितत् ॥ ४६ ॥ सुशीलायाअ
कथयत्साततोविस्मिताभवत् ॥ दैवात्कपिलमायातंसुशीलाप्रांजलिःसती ॥ ४७ ॥ उवाचपरमाश्च
र्यंशृणुस्वामिन्मयोदितम् ॥ अत्यद्भुतमिदंवक्ष्येयदिरोषोभवेन्नते ॥ ४८ ॥ महाविवेकमाश्रित्ययदि
क्षाम्यासितद्वदे ॥ कपिलःप्रीतमनसासुशीलांप्राहवैततः ॥ ४९ ॥ सत्यंवदत्वंसुश्रोणिकोयंविप्रइहा
गतः ॥ किंतदाश्चर्यमत्रासीत्तन्मेविस्तरतोवद ॥ ५० ॥ त्वदुक्तौनास्तिमेरोषोमद्भक्तासिनित्यदा ॥ त
तःसुशीलासर्वंतत्पुरावृत्तमवर्णयत् ॥ ५१ ॥ श्रुत्वातुकपिलस्यासीत्क्रोधतापःसुविस्मयः ॥ औत्सुक्ये
नततःसोगात्धनागारंविवेशसः ॥ ५२ ॥ यदैवधनमादातुमैच्छत्सकपिलोद्विजः ॥ तदैवचमहासर्प
स्तंन्यवारयतद्भुतम् ॥ ५३ ॥ आह्वयामासपर्णादंसुशीलाविस्मितासती ॥ एहिविप्रगृहाणेदंधनंयाव

ह्विमन्यसे ॥ ५४ ॥ ततोगत्वासपर्णादोमहासर्पंप्रपश्यति ॥ सुवर्णराशिमादत्तस्वकीयेवस्त्रपल्लवे ॥
॥ ५५ ॥ भारमात्रंसुवर्णंतुगृहीत्वापिततःपरम् ॥ आदातुमैच्छदधिकंततःसर्पोन्यवारयत् ॥ ५६ ॥
ऊचेमनुष्यवाचातंपर्णादंप्रहसन्निव ॥ वांछितादधिकंवित्तंलब्ध्वाप्यधिकमिच्छसि ॥ ५७ ॥ नैतद्युक्तं
ह्विपर्णादतृष्णावृद्धिर्वृथातव ॥ बह्वायासेनयेनेदमर्जितंकपिलेनहि ॥ ५८ ॥ धनंशक्योनसोत्रापिकिंमु
त्वंविप्रमन्यसे ॥ उष्णंनिदाघेसहताहेमंतेचतथाहिमम् ॥ ५९ ॥ वर्षासुवर्षधाराश्चसहित्वायदुपार्जि
तम् ॥ अटमानेनसद्मानिधनिनांवैदिवानिशम् ॥ ६० ॥ गच्छतादुर्गमार्गेषुव्याघ्रदस्युभयेषुच ॥ अ
पमानाविषोपेतंभुक्तमन्नंचसर्वदा ॥ ६१ ॥ अपश्यताधर्ममार्गमधर्मंचाप्यपश्यता ॥ केवलंधनलाभंहि
पश्यतायदुपार्जितम् ॥ ६२ ॥ तेनापिशक्यतेनैवग्रहीतुंरेणुमात्रकम् ॥ कपिलेनामुनातत्रकिंमुत्वंवि
प्रमन्यसे ॥ ६३ ॥ धनंदानवताप्राप्यंसर्वकामफलप्रदम् ॥ अदातानतदाप्नोतिप्रयत्नानांशतैरपि॥ ६४॥
पश्यन्नपिचमूढोयंजनोनैवंप्रपश्यति ॥ लोभेनमुष्टनेत्रोयंयथांधोरत्नसंचयम् ॥ ६५ ॥ ज्ञानिनस्तापलान्
शूरान्कुशलान्सर्वकर्मसु ॥ अटतोधनिनांद्वारेकिंनपश्यतिमूढधीः ॥ ६६ ॥ ज्ञानदातालभेज्ज्ञानंभूमिदा
तालभेद्भुवं ॥ अन्नदातालभेदन्नंधनदातालभेद्धनं ॥ ६७ ॥ निक्षिप्तंभुवियद्बीजंतद्वृद्ध्यावर्धतेबहु ॥
अतोदानेनलभतेयद्यद्वांछतिमानवः ॥ ६८ ॥ यदश्नातिनरोनित्यंयद्ददातिचनित्यशः॥तदेवतद्धनंविद्धिशेषं
कस्यापिरक्षति॥६९॥यथैवहिपरस्यार्थेक्षेत्ररक्षतिपूरुषः ॥ तृणादिनिर्मितस्तद्वत्कदर्योधनमात्मनः॥७०॥दा

नंभोगोथवानाशस्तिस्रोवस्थाधनस्यच ॥ दानभोगविहीनस्यनाशमायातिनिश्चितं ॥ ७१ ॥ नाशस्तु
षड्विधःप्रोक्तःसंचितस्यधनस्यच ॥ भूपाद्दस्योश्चदायादाद्व्यवहारानलार्पणात् ॥ ७२ ॥ तथैवकपिल
स्येहनाशोवित्तस्यदृश्यते ॥ पर्णादयाहिशीघ्रंत्वंकृतकृत्य स्वकंगृहं ॥ ७३ ॥ मद्वाक्यंचिंतयानस्त्वंयद्धितंत
त्कुरुष्वभोः ॥ तदाश्चर्यमहद्दृष्ट्वाकपिलोदीनमानसः ॥ ७४ ॥ नत्वातंभुजगंप्राहप्रांजलिर्विनयान्वि
तः ॥ त्वंमेमातापिताभ्रातागुरुःपुत्रस्त्वमेवमे ॥ ७५ ॥ यइत्थंमांबोधयसिहितंसर्वंजनस्ययत् ॥ इ
दानींब्रूहिकृपयायेनमेस्याद्धितंपरं ॥ ७६ ॥ धर्मज्ञोसिमहाप्राज्ञत्वदुक्तंप्रकरोम्यहं ॥ जन्मप्रभृतिदोषा
णांयेजाताममराशयः ॥ ७७ ॥ कथंदग्धाभवेयुस्तेस्वर्गलोकःकथंभवेत् ॥ कथंचविष्णुसालोक्यंमुक्तिमा
प्स्यामिमंदधीः ॥ ७८ ॥ पश्चात्तापेनमहतातप्तस्त्वांशरणंगतः ॥ शाधिमांभुजगाधीशयथाममहितंभ
वेत् ॥ ७९ ॥ ॥ श्रीवराहउवाच ॥ ॥ कपिलस्यवचःश्रुत्वाससर्पःसर्ववित्तमः ॥ उवाच
श्लक्ष्णयावाचायथास्याज्जगतोहितम् ॥ ८० ॥ ॥ इतिश्रीवाराहपुराणेचातुर्मास्यमाहात्म्येद्वाविंशो
ऽध्यायः ॥ २२ ॥ ॥ सर्पउवाच ॥ ॥ शृणुष्वावहितोविप्रकथयाम्यखिलंतव ॥ देशकालानु
सारेणदानमध्ययनंतपः ॥ १ ॥ तथानानाविधंकर्मविशेषफलतांव्रजेत् ॥ यातिनिष्फलतांचापित
यातेकथयाम्यहम् ॥ २ ॥ कारुकोहंपुराजातोमथुरायांद्विजोत्तम ॥ तदासूर्यग्रहश्चासोत्पर्वकालेम
हान्भुवि ॥ ३ ॥ लोकान्सुकृतिनोयातान्कुरुक्षेत्रंव्यलोकयम् ॥ ममापिगंतुमिच्छासीत्ततोहंभार्यया

सह ॥ ४ ॥ गतवान्कौरवक्षेत्रंदत्तस्याक्षयकारकं ॥ ग्रहकालेतुसंप्राप्तेधनिनोवणिजोमुहुः ॥ ५ ॥
नानाविधानिदानानिराजपुत्रास्तथापरे ॥ राजानोब्राह्मणाश्चापिवैश्यशूद्राःपरेपिच ॥ ६ ॥ ददुःस्वे
च्छानुसारेणयद्यस्मैरुरुचेतदा ॥ तादृशान्ददतोदृष्ट्वाममशोकःसमाविशत् ॥ ७ ॥ धिग्जन्ममंदभाग्य
स्यमातुर्यौवनहारिणः ॥ येननोतोषिताविप्रादानमानादिभिर्भुवि ॥ ८ ॥ नाहिकिंचिन्नमेस्त्यद्यऋतेनि
ष्कचतुष्टयात् ॥ विद्यतेशस्त्रमेकंचयेनवेणून्छिनद्म्यहम् ॥ ९ ॥ जीविकार्थमवश्यंमेरक्षणीयमिदंपरं ॥
अतोहंकिंनुविप्रायदद्यांपुण्यस्यलब्धये ॥ १० ॥ हावृथाजीवितंमेद्यकेवलात्मोदरंभरेः ॥ तरवः
किन्नजीवंतिभस्त्राःकिन्नश्वसंतिच ॥ ११ ॥ नपिबंतिनखादंतिकिंग्रामपशवोपरे ॥ श्रेयांसःपशवो
लोकेयेषांमांसास्थिचर्मभिः ॥ १२ ॥ तुष्यंतिप्राणिनोत्यर्थमादृशानतुजंतवः ॥ एवंलालप्यमानंमांम
मपत्नीपतिव्रता ॥ १३ ॥ प्राहगद्गदयावाचात्यजशोकंमहामते ॥ यदस्तितत्प्रदेहित्वंसर्वस्वंनस्तदेव
हि ॥ १४ ॥ हरिस्तेनैवतुष्टःस्यात्सर्वसाक्षीनसंशयः ॥ शक्तितोप्यधिकंदानंसर्वस्वंदीयतेयदि ॥ १५ ॥
कथंहरिर्नतुष्येतसर्वज्ञोदानतोहिनः ॥ जीविकातुभवेदेवयावदन्नंहिजीवितं ॥ १६ ॥ यावज्जीवं
तथान्नंस्यादायुरन्नंप्रयच्छति ॥ इतिभार्यावचःश्रुत्वातत्रानिष्कचतुष्टयम् ॥ १७ ॥ शस्त्रंचवस्त्रसंयुक्तंसर्वं
विप्रायदत्तवान् ॥ ततोहमायुषिक्षीणेगतवान्यमसादनम् ॥ १८ ॥ भार्याचानुगताविप्रततोमामब्रवी
द्यमः ॥ रविग्रहेकुरुक्षेत्रेसर्वस्वंदत्तवान्यतः ॥ १९ ॥ अतस्त्वयाहिसर्वेभ्यउत्कृष्टंस्थानमुत्तमम् ॥ तदा

नैंयैः प्रदत्तानिमहादानान्यपिध्रुवम् ॥ २० ॥ रविग्रहेकुरुक्षेत्रेतेसर्वेत्वदधोभवन् ॥ नतेसर्वंस्वदातारोय
थात्वंदत्तवानसि ॥ २१ अतस्तेभ्यः परंस्वर्गेभुंक्ष्वभर्यासहायवान् ॥ इत्युक्त्वामांततोदूतान्यमस्तत्का
लमादिशत् ॥ २२ ॥ सूर्यलोकंद्रुतंदूतःप्रापयध्वममुंनरम् ॥ तत्रापिस्यादुत्तमंयत्तत्रस्थानेवसत्वसो
॥ २३ इतिदूतावचःश्रुत्वासूर्यलोकंसभार्यकं ॥ सद्योमांतेनयंतिस्मसर्वभोगसमन्वितं ॥ २४ ॥ म
न्वंतरंभवेद्यावत्तत्राहंस्थितवान्मुदा ॥ ततोभूमावहंजातःकर्मशेषसमन्वितः ॥ २५ ॥ ब्राह्मणोवासुदे
वाख्योवेदवेदांगपारगः ॥ धनवान्रूपसंपन्नोयुवाब्राह्मणपूजकः ॥ २६ ॥ कदाचिद्दैवयोगेनब्राह्म
णंगृहमागतं ॥ अवमेनेधनमदात्तेनपापेनसंप्रति ॥ २७ ॥ अभूद्वर्षसहस्रांमेसर्पाकारमिदंवपुः ॥ अ
नुग्रहाद्ब्राह्मणानांस्मृतिरद्यापिवर्तते ॥ २८ ॥ वसानंचात्रसततंयक्षआगत्यमांब्रवीत् ॥ कुबेरस्याज्ञया
त्रैवस्थित्वारक्षधनंसदा ॥ २९ ॥ आर्जकोकपिलोह्यस्यस्वामीशंबुकएवच ॥ सर्पतावद्धनंरक्षयावच्छं
बुकआव्रजेत् ॥ ३० ॥ काश्यांवसतिधर्मात्माचतुर्थांशप्रदायकः ॥ इत्युक्त्वातुगतेयक्षेकुबेरंहृदिचिंत
यन् ॥ ३१ वायुभक्षउपासीनस्तेनतुष्टोभवद्धिसः ॥ प्रत्यक्षगोचरोमेभूत्ततोमांप्रणतंभुवि ॥ ३२ ॥
उत्थाप्यसांत्वयामासदययापरयान्वितः ॥ नशोकोनापिदुःखंतेभूयात्सर्पसुखंवस ॥ ३३ ॥ निवृत्तेवि
प्रकोपाग्नौयक्षस्त्वंमेभविष्यसि ॥ नाहंविशंकेसुरराजवज्रान्नत्र्यक्षशूलान्नयमस्यदंडात् ॥ ३४ ॥ नाग्न्य
र्कसोमानिलवित्तपेभ्यःशंकेभृशंब्रह्मकुलावमानात् ॥ मांधातैवपुराप्राहगाथांपुण्यांस्वमंत्रिणे ॥ ३५ ॥

कन्यार्थमागतंदृष्ट्वासौभरिंमुनिसत्तमं ॥ सर्वथानैवशुद्ध्येतपापंविप्रावमानजं ॥ ३६ ॥ अतस्त्वंवर्ष
साहस्रंसर्पदेहेसुखंवस ॥ अत्रापिममसेवांत्वंकुरुषेपूर्वकर्मणा ॥ ३७ ॥ तेनत्वंसुकृतेनाथपरोक्षोभ
विष्यसि ॥ इत्युक्त्वांतर्दधेदेवस्तदाप्रभृतितेगृहे ॥ ३८ ॥ वसामिचिंतयन्नित्यंतंदेवसुरपूजितं ॥ इति
तेकथितंविप्रस्वानुभूतंफलमया ॥ ३९ ॥ देशकालादियुक्तस्यशक्तितोप्यधिकस्यच ॥ दानस्यकृपया
विष्णोराश्चर्यंशृण्वतांमहत् ॥ ४० ॥ अजानतोहितंस्वस्यसारासारमपश्यतः ॥ कथंभवेदस्याहितंलोभां
धस्याविवेकिनः ॥ ४१ ॥ इतिसंचिंत्यकृपयाचक्रेविप्रंहरिःस्वयं ॥ तीर्थानिपर्वकालांश्चपात्राणिवि
विधानिच ॥ ४२ ॥ सदासर्वत्रसर्वेभ्योदानपुण्यंपरंस्मृतं ॥ एवंचेन्नकरोत्येषतथाप्येकस्यलाभतः ॥
॥ ४३ ॥ तीर्थेवापर्वकालेवापात्रेवादानमाचरेत् ॥ समाजेवाद्वयोःकुर्यात्त्रयाणांवाविशेषतः ॥ ४४ ॥
अधिकंवासमंन्यूनंदानमाचरतामयं ॥ तेनाप्यस्यहितंभूयादितिसंचिंत्यवैमुहुः ॥ ४५ ॥ परयाकृ
पयादेवतेनाहंवञ्चितोहितं ॥ सूर्यचंद्रौकुजःसौम्योगुरुःशुक्रःशनिस्तथा ॥ ४६ ॥ ग्रहाःसप्तैवऋज
वोराहुकेतूचवक्रगौ ॥ सृष्ट्वाकल्पसमारंभेसूर्यराज्येभ्यषेचयत् ॥ ४७ ॥ तेनास्यवासरोमुख्यःकल्पा
दौपरिकीर्तितः ॥ उदयादुदयोयावत्तावद्वासरईरितः ॥ ४८ ॥ तत्रक्रमेणसप्तानांग्रहाणांवासराःस्मृताः
॥ तथाऽश्विन्यादयश्चैतातारकाःसप्तविंशतिः ॥ ४९ ॥ नभोमंडलगाःसृष्ट्वाराशीन्मेषादिकांस्ततः ॥
सृष्ट्वाविभागंकृतवान्नक्षत्राणांचसर्वशः ॥ ५० ॥ विष्कंभादींस्तथायोगान्सप्तविंशतिसंख्यया ॥ करणा

निदर्शकंचसृष्ट्वान्लीलयाहरिः ॥ ५१ ॥ एतेनैवहिजायंतेपर्वकालाःसहस्रशः ॥ शुभाशुभानिलोकानां लोकयात्राश्चसर्वशः ॥ ब्राह्मेमुहूर्तेचोत्थायपंचांगानिनिरीक्षयेत् ॥ ५२ ॥ तिथिंवारंचनक्षत्रंयोगंकरण मेवच ॥ पंचांगानीहकालस्यज्ञात्वापुण्यमवाप्नुयात् ॥ ५३ ॥ ग्रहचारंनिरीक्षेतपर्वकालस्यहेतवे ॥ ततोज्ञात्वाप्रकुर्वीतकर्माणिविविधान्यपि ॥ ५४ ॥ अधिकारंदेशकालौज्ञात्वाकर्माणिकुर्वतः ॥ जायतेहिफलंयस्माज्ज्ञानीयात्त्रीण्यतःसदा ॥ ५५ ॥ इमानित्रीणिनज्ञात्वायःकर्मकुरुतेनरः ॥ नित्यंनैमित्तिकंकाम्यंनतत्फलमवाप्नुयात् ॥ ५६ ॥ स्वाभाविकायोगजाश्चपर्वकालाद्विधास्मृताः ॥ स्वाभाविकास्तत्रसर्वेतववक्ष्येसमासतः ॥ ५७ ॥ वासरेषुचसर्वेषुतिथिष्वपिचवैतथा ॥ रविसंक्रमयोगेषुपर्वकालास्ततःस्मृताः ५८ ॥ सूर्याचंद्रमसोर्यस्याद्भागद्वादशकांतरम् ॥ सावैतिथिःसमाख्याताद्विधापंचाधिकादश ॥ ५९ ॥ जायंतेतिथयःशुक्लकृष्णभेदेनतत्रवै ॥ शृणुस्वाभाविकाःपुण्याःपक्षयोरुभयोरपि ॥ ६० ॥ वासरेषुरवेर्वारःपर्वकालोमहान्स्मृतः ॥ दशम्यादित्रयंदर्शःपौर्णिमाचसदामता ॥ नक्षत्रेयत्रदृश्येतचंद्रमाःप्रत्यहंजनैः ॥ ६१ ॥ तदेवदिननक्षत्रंजायतेतत्रवैशृणु पुण्यश्चश्रवणश्चैवपर्वकालःपरःस्मृतः ॥ ६२ ॥ यत्स्यात्स्वजन्मनक्षत्रंजन्मतोदशमंतथा ॥ एकोनविंशच्चतथानक्षत्रंपर्वकालकः ॥ ६३ ॥ जन्मवारोजन्मतिथिःपर्वकालःसदास्मृतः ॥ सूर्यचंद्रौयदास्यातां चक्रेखार्जुरिकाह्वये ॥ ६४ ॥ एकनक्षत्रचरणेमहान्स्यात्पर्वकालकः ॥ योगेषुपर्वकालःस्याद्व्यतीं

पातश्चवैधृतिः ॥ ६५ ॥ भद्राख्यंकरणंप्राहुःपर्वकालंतुकेचन ॥ ग्रहसंक्रांतिकालोपिपर्वस्वाभाविकं
स्मृतम् ॥ ६६ ॥ नक्षत्रराशिभेदेनद्विधासंक्रांतिरिष्यते ॥ तत्रापिसूर्यसंक्रांतिःपर्वकालोमहान्स्मृतः ॥
॥ ६७ ॥ युगादयश्चमन्वाद्यामातापित्रोर्मृतेदिने ॥ गुरुश्रोत्रियविप्राणांसंगमोयद्दिनेभवेत् ॥ ६८ ॥
व्रतबंधेविवाहेचदीक्षायांविष्णुसन्निधौ ॥ सदैवपर्वकालःस्यात्स्वभावेनेतिविश्रुतः ॥ ६९ ॥ यदा
द्वयोस्त्रयाणांवाचतुर्णांवायुतिर्भवेत् ॥ स्वाभाविकानांविप्रेंद्रसचचूडामणिर्भवेत् ॥ ७० ॥ द्वयोर्योगेशत
गुणमेकैकस्यफलंस्मृतम् ॥ त्रयाणांलक्षगुणितंचतुर्णांकोटिसंमितम् ॥ ७१ ॥ पंचानांस्यादनंतंतत्ष
ण्णांसंख्यानविद्यते ॥ कल्पादौयस्यमासस्यपूर्णमास्यांशशीभवेत् ॥ ७२ ॥ यन्नक्षत्रगतस्तेननाम्नाचै
त्रादयोभवन् ॥ एवंद्वादशमासावैजायंतेचमुहुर्मुहुः ॥ ७३ ॥ अलातचक्रसंकाशमेतच्चक्रंसदाद्विज ॥
हरत्यायूंषिलोकानांसततंकेशवाज्ञया ॥ ७४ ॥ ज्ञानिनस्तद्विजानंतिनैवजानंतिमोहिताः ॥ आयुर्गतं
गतंमेद्यवृथेतिभयविह्वलः ॥ ७५ ॥ ज्ञानीचरतिवैपुण्यमज्ञानीनकथंचन ॥ इदमद्यमयालब्धमिमं
प्राप्स्येमनोरथम् ॥ ७६ ॥ इदमस्तीदमपिमेभविष्यतिपुनर्धनम् ॥ असौमयाहतःशत्रुर्हनिष्येचापरा
नपि ॥ ७७ ॥ युवाहमद्यजातोस्मिपत्नीचतरुणीमम ॥ ईश्वरोहमहंभोगीसिद्धोहंबलवान्सुखी ॥
॥ ७८ ॥ आढ्योभिजनवानस्मिकोन्योस्तिसदृशोमया ॥ यक्षेदास्यामिमोदिष्येइत्यज्ञानविमोहि
ताः ॥ ७९ ॥ भ्रमचित्ताश्रितयंतोमृत्युंजानंतिनोजनाः ॥ नार्चयंतिहरेर्मूर्तिंचलामप्यथवाचलाम्

॥ ८० ॥ नयच्छंतिधनंविप्रेसुखमिच्छंतिमोहिताः ॥ पुण्यस्यफलमिच्छंतिपुण्यंनेच्छंतियत्नतः ॥
॥ ८१ ॥ फलंपापस्यनेच्छंतिपापंकुर्वंतियत्नतः ॥ पापस्यहिफलंदुःखंपुण्यस्याहिफलंसुखम् ॥
॥ ८२ ॥ कुर्वंतिपापकर्माणिसुखमिच्छंतिमोहिताः ॥ यदापापंप्रकुर्वंतिब्राह्मणांश्चावजानते ॥८३ ॥
हसंतिहितदामूढादुर्भाग्येनरुदंतिहि ॥ स्वयंकुर्वंतिनोपुण्यंदृष्ट्वापुण्यकृतोनशठ् ॥ ८४ ॥ उपहासंप्रकु
र्वंतिनिंदंतिचपुनःपुनः ॥ केचिद्विघ्नानाचरंतिपुण्यकर्मणिदुर्मदाः ॥ ८५ ॥ स्वधर्मत्यागिनःपुंसःप्रशं
संतिमुहुर्मुहुः ॥ स्वयंदानंनैवकुर्युःपरान्नप्रेरयंतिहि ॥ ८६ ॥ वांच्छंतिचसुखंमूढाविलज्जाःपापबुद्ध
यः ॥ दारिद्र्यमनसस्तापंपीडांदेहस्यदुःसहाम् ॥ ८७ ॥ पुत्रदारादिशोकंचभुंजानाहिरुदंतिते ॥
हादैवकिंमयापूर्वंकृतंपापंदुरात्मना ॥ ८८ ॥ येनाहमीदृशंदुःखंभुंजेपरमदुःसहम् ॥ आक्रोशंतित
दादेवंब्राह्मणान्वंदतेमुहुः ॥ ८९ ॥ एकदादुःसहादस्मान्मुच्येहंतद्विधीयताम् ॥ ततोदैवेनमुक्तोपि
तस्माद्दुःखाद्धरीच्छया ॥ ९० ॥ पुनर्विस्मरतेमूढःशुनःपुच्छमिवानृजुः ॥ आर्तादेवान्नमस्यंतितपः
कुर्वंतिरोगिणः ॥ ९१ ॥ निर्धनाविनयंयांतिवृद्धानारीपतिव्रता ॥ अतःपुण्यंप्रकुर्वीतदानंकुर्वीतशक्ति
तः ॥ ९२ ॥ प्रेरयेच्चापिदानायतेनपुण्यमवाप्नुयात् ॥ दार्ढ्यंयावच्छरीरेस्मिन्यावच्चेंद्रियशक्तता ॥ ९३ ॥
हितंतावच्चरेत्प्राज्ञोन्यथादुःखीभवेन्नरः ॥ दुःखप्राप्तौतुयत्पुण्यंतन्निवृत्तिमभीप्सवः ॥ ९४ ॥ चरंतिगृहदाहे
वैकूपस्यखननंयथा ॥ पश्चात्तापेननोयावदात्मातप्येतदेहिनां ॥ ९५ ॥ तावदेवहितंस्वस्यप्राज्ञःकुर्वीतमा

चिरम् ॥ नहिदेवोखिलाधीशःपूजांवांच्छतिदेहिनः ॥ ९६ ॥ म्रियंतेनहिविप्राश्चदानंनैषकरोतिचेत् ॥
नहिदेवाःक्षुधार्ताःस्युरयंयदियजेन्नतान् ॥ ९७ ॥ किंतुस्वहितवांच्छाचेदुःखहानिंतथेच्छुभिः ॥ कर्तव्यं
देवयजनमर्चनीयोहरिस्तथा ॥ ९८ ॥ संतुष्टाश्चैवकर्तव्याविप्रादानेनभूरिणा ॥ एवंबुद्ध्याप्रकुर्वंतिज्ञा
निनःस्वात्मनोहितं ॥ ९९ ॥ मूढानैवप्रकुर्वंतिमज्जंतेदुःखवारिधौ ॥ षण्मासाःपर्वकालाःस्युःस्वभावे
नचसर्वदा ॥ १०० ॥ चातुर्मास्यंतथामाघेवैशाखोद्वादशस्वपि ॥ षण्णामेषांतुमासानांसर्वाःस्युस्ति
थयःशुभाः ॥ १०१ मार्गशीर्षादिमासानांचतुर्णांकृष्णपक्षजाः ॥ नभस्येप्रेतपक्षेपिपंचाष्टम्योऽष्टकाभि
धाः ॥ २ ॥ तासांपूर्वापरंचेतिदिनद्वयमपिद्विज ॥ अन्वष्टकादशस्युस्ताःपितृकार्येमहाफलाः ॥ ३ ॥
स्नानदानादिकंतासुकृतंकोटिगुणंभवेत् ॥ आश्विनेकार्तिकेमासेशुक्लास्यात्प्रातिपत्तुया ॥ ४ ॥ पर्व
कालेभवेत्साहिदत्तस्याक्षयकारका ॥ तथैवपर्वकालःस्याद्वितीयाश्विनचैत्रयोः ॥ ५ ॥ शुक्लातस्यांकृ
तंदानंभवेन्महाफलप्रदं ॥ चैत्रवैशाखमाघानांशुक्लाभाद्रपदस्यच ॥ १०६ ॥ तृतीयातुभवेत्पुण्यादत्ताक्ष
यफलप्रदा ॥ बुधवारेयदासास्याद्रोहिण्याश्रवणेनवा ॥ ७ ॥ युक्ताभूरिफलाप्रोक्तापर्वकालःसयोगजः
॥ चैत्रभाद्रपदेमाघेचतुर्थीशुक्लपक्षगा ॥ १०८ ॥ पर्वकालोभवेद्विप्रविशेषाच्छनिभौमयुक् ॥ अन्ये
ष्वपिचमासेषुशनिभौमयुताभवेत् ॥९॥ चतुर्थीशुक्लपक्षस्थादत्तस्याक्षयकारिणी ॥ नभोनभस्ययोर्माघेमा
र्गशीर्षेपिशुक्लगा ॥ १० ॥ पंचमीतुभवेत्पुण्याविशेषाद्रविसंयुता ॥ मार्गशीर्षेथवाचैत्रेशुक्लाषष्ठीमहाफ

ला ॥ ११ ॥ नभस्येकार्तिकेवापिशुक्लाकृष्णाशुभास्मृता ॥ नभस्यस्यासितेपक्षेषष्ठीभौमेनसंयुता ॥
॥ १२ ॥ व्यतीपातेचरोहिण्यांसाषष्ठीकपिलाभवेत् ॥ कोटिसूर्यग्रहसमंपुण्यंतस्यांप्रकीर्तितं ॥ १३ ॥
माघेभाद्रपदेमार्गशीर्षेशुक्लातुसप्तमी ॥सदैवपुण्याविप्रेंद्रविशेषाद्रविसंयुता ॥१४॥ यत्रकुत्रापिमासेस्याच्छु
क्लारविदिनेद्विज ॥ तस्यांकोटिगुणंपुण्यंस्नानदानादिकर्मणः ॥ १५ ॥ आश्लेषारेवतीहस्तशततारामृ
घायुता ॥ रोहिण्यावायुताविप्रमहत्पुण्यंतदास्मृतं ॥ १६ ॥ पुनर्वसुबुधोपेताचैत्रेमासिसिताष्टमी ॥
प्रातस्तुविधिवत्स्नात्वावाजपेयफलंलभेत् ॥ १७ ॥ शुक्लाष्टमीबुधयुतापौषेभरणिसंयुता ॥ तदाको
टिगुणंपुण्यंमुनिभिःपरिकीर्तितं ॥ १८ ॥ यदाकदाभवेदार्द्राशुक्लायांबुधवासरे ॥ अष्टम्यांतुतदापिस्या
त्पर्वकालोमहान्द्विज ॥ १९ यावाकावापिशुक्लास्यादष्टमीबुधसंयुता ॥ तदाकोटिगुणंपुण्यंस्नानदाना
दिकर्मणः ॥ २० ॥ श्रावणस्यासितेपक्षेनिशीथेयाष्टमीभवेत् ॥ तस्यामभ्यर्च्यगोविंदंसलभेद्वांछितंफलं
॥ २१ बुधवारेचरोहिण्यांविशेषात्फलदायिनी ॥ नाहिभाग्यंविनालभ्याताद्दशीद्विजसत्तम ॥ २२ ॥
आश्विनेकार्तिकेचैत्रेयाशुक्लानवमीभवेत् ॥ स्नानदानादिकंतत्रसर्वंकोटिगुणंभवेत् ॥ २३ ॥ सर्वापि
दशमीपुण्यायद्यपिस्यात्तथापिहि ॥ ज्येष्ठमासिसिता पुण्याविशेषाद्धस्तसंयुता॥ २४ ॥ततोपिचविशेषेणय
दिसाभौमयुग्भवेत् ॥ सर्वपापक्षयकरादत्तस्याक्षयकारिणी ॥ २५ ॥ एवमेकादशीसर्वामहापुण्यातथै
वाहि ॥मार्गशीर्षेमहापुण्यातथापुष्ययुतातुया ॥ २६ ॥ पुनर्वसुयुतावापिमहापुण्यफलप्रदा ॥ तथैव

द्वादशीसर्वापुण्याप्रोक्तामनीषिभिः ॥ २७ ॥ विषेषाद्बुधवारेणयुक्तापुण्यतमास्मृता ॥ पूर्वाहस्तस्त
थास्वातीज्येष्ठामूलंश्रुतिस्तथा ॥ २८ ॥ उत्तराभाद्रपदाचैवरेवतीकृत्तिकामृगः ॥ पुनर्वसुश्चपुष्यश्चय
दिशुक्लासुजायते ॥ २९ ॥ क्रमाच्चैत्रादिमासेषुद्वादशीषुयदृच्छया ॥ तदापुण्यंमहत्प्रोक्तंविशेषाद्बुध
वासरे ॥ ३० ॥ कृष्णापिमाघेमूलेनश्रवणेनाथवायुता ॥ फाल्गुनेवापिसापुण्याविशेषात्तिलदानतः ॥
॥ ३१ ॥ गुरौकुजेचसिंहस्थयदामेषेरविर्भवेत् ॥ द्वादशीशुक्लपक्षीयामहापुण्याभवेद्द्विज ॥ ३२ ॥
विशेषाद्व्यतिपातश्चहस्तोदैवेनलभ्यते ॥ कपिलाषष्ठितुल्यास्यात्सातिथिर्नात्रसंशयः ॥ ३३ ॥ लभ्य
तेनाल्पभाग्येनतादृशीद्वादशीयदि ॥ सूर्यग्रहणकोटीनांतदापुण्यंभवेद्ध्रुवं ॥ ३४ ॥ उपरागसहस्रा
णिव्यतीपातायुतानिच ॥ अमालक्षंतुद्वादश्याःकालांनार्हंतिषोडशीं ॥ ३५ गंगासमानदीनास्तिनदे
वोविष्णुनासमः ॥ नास्तिवेदसमंशास्त्रंनतिथिर्द्वादशीसमा ॥ ३६ ॥ चैत्रेमासिसितेपक्षेकृष्णाभाद्रप
देतथा ॥ त्रयोदशीक्रमात्पुण्यादैवेपित्र्येचकर्मणि ॥ ३७ ॥ पितॄणांचापिदेवानामक्षय्यातृप्तिरिष्यते ॥
यद्दत्तंतुयथाशक्त्यातस्यांकोटिगुणंध्रुवं ॥ ३८ ॥ कृष्णावायदिवाशुक्लासर्वापुण्याचतुर्दशी ॥ अंगारके
णयुक्ताचेन्महापुण्याभवेद्ध्रुवं ॥ ३९ विशेषाच्चित्रयायुक्तादत्तस्याक्षयकारिणी ॥ अमावास्यापूर्णमासी
सर्वापिस्यान्महाफला ॥ ४० ॥ आषाढेकार्तिकेमाघेवैशाखेमार्गशीर्षके ॥ पौर्णमासीविशेषेणमहा
पुण्यतमाभवेत् ॥ ४१ ॥ चैत्रादिषुचमासेषुस्वनामर्क्षाणिकर्हिचित् ॥ चित्रादीनिभवेयुश्चेत्तदापिस्या

न्महाफलम् ॥ ४२ ॥ यदिचंद्रग्रहस्तस्यांभवेच्चूडामणिर्हिसः ॥ अनंतफलमाप्नोतिस्नानदानादिकर्मणः ॥ ४३ ॥ सर्वमेरुसमंदानंसर्वेव्यासस्समाद्विजाः ॥ सर्वेगंगासमंतोयंराहुग्रस्तेनिशाकरे ॥ ४४ ॥ रविग्रहस्त्वमायांस्यात्कदाचिद्यदिसुव्रत ॥ यवमात्रंसुवर्णंचतदामेरुसमंभवेत् ॥ ४५ ॥ पितॄणामक्षयातृप्तिर्दत्तानंतफलायच ॥ देवाश्चपितरःसर्वेप्रतीक्षंतेरविग्रहम् ॥ ४६ ॥ स्वतृप्तिहेतवेविप्रतदानंतफलायच ॥ यत्रकुत्राप्यमायांस्यात्सूर्यचंद्रमसोर्यदा ॥ ४७ ॥ योगःस्यादेकनक्षत्रेविशेषादेकपादके ॥ तावान्कालोमहापुण्योदत्तस्याक्षयकारकः ॥ ४८ ॥ अमासोमेनभौमेनरविणागुरुणातथा ॥ तत्पर्वपद्मकंनामसूर्यपर्वशताधिकं ॥ ४९ ॥ कृतेतुगुरुणायुक्तात्रेतायांभौमसंयुता ॥ द्वापरेरविणायुक्तापुण्यासोमयुताकलौ ॥ ५० ॥ रविवारयुतापुण्याकलावपिप्रकीर्तिता ॥ कालेहलेनकृष्टायांपर्जन्यात्कामवर्षिणः ॥ ५१ ॥ सुभूमौरोपितंबीजमीतिभिश्चविवर्जितं ॥ कर्षकस्यचदैवेनयथाधान्यंप्ररोहति ॥ ५२ ॥ देशकालवशादेवपात्रयोगात्तथैवच ॥ साफल्यंभजतेदानंकर्माप्यन्यत्फलप्रदम् ॥ ५३ ॥ देशकालंतथाशक्तिमपेक्ष्यैवफलंध्रुवम् ॥ पर्वकालाःसमाख्याताएवंतेद्विजसत्तम ॥ ५४ ॥ प्रायेणैतेतत्रप्रोक्तामहापुण्यप्रदाःस्मृताः ॥ पंचाशत्कोटिविस्तीर्णाभूरियंद्विजसत्तम ॥ ५५ ॥ तत्रस्याद्भारतंवर्षंमहापुण्यफलप्रदं ॥ तत्रापिपुण्यक्षेत्राणितत्रतत्रभवंतिहि ॥ ५६ ॥ तानिविस्तरतोवक्तुंनशक्नोमिद्विजोत्तम् ॥ तथापिवक्ष्येप्रायेणसुप्रसिद्धानिमेशृणु ॥ ५७ ॥ गंगागोदावरीरेवाकृष्णाभीमासरस्वती ॥ कौशिकीशरयूःसि

प्रामहीतापीचगंडकी ॥५८॥ तमसाब्रह्मपुत्रश्चशोणश्चर्मण्वतीसुधा ॥ कावेरीवरदासिंधुःपयोष्णीसुरवर्त्म
गा ॥ ५९ ॥ पूर्णाधर्मनदीकद्रुःप्रणिताकृतमालिका ॥ ताम्रपर्णीवैतरणीशतद्रुश्चइरावती ॥ ६० ॥
विपाशागिरिजानीरायमुनातुंगभद्रिका ॥ एताश्चान्याश्चबह्वोनद्यःपुण्यजलाइह॥६१॥ सेतुबंधंहरिद्वारं
बदरीनैमिषंगया ॥ पुष्करंचकुरुक्षेत्रंद्वारकांबुदपर्वतः ॥ ६२ ॥ प्रभासंविरजंकाशीप्रयागंत्र्यंबकंतथा ॥
अवंत्ययोध्याकांचीचशेषाद्रिःपौरुषोत्तमं ॥ ६३ ॥ मथुरेत्येवमादीनिक्षेत्राणिवसुधातले ॥ पुण्यानिपु
ण्यनिचयैर्लभ्यंतेमानवैरिह ॥ ६४ ॥ देशंकालंसमासाद्यसर्वथादानमाचरेत् ॥ सत्कर्मचापिकुर्वीत
तदनंतत्वमाप्नुयात् ॥ ६५ ॥ यस्मिन्देशेथवाकालेयत्रकुत्रापिकर्हिचित्॥सतिवित्तेमहापात्रंयदालभ्येतदैव
तः ॥ ६६ ॥ सएवदेशकालाच्चवरीयान्बहुपुण्यदः॥ यदातुकालोदेशोवाद्रव्यंवाजातुलभ्यते ॥ ६७ ॥
यदिपात्रंनलभ्येततदासंकल्पयेद्धनम् ॥ अनादिनिधनंविष्णुंसर्वलोकमहेश्वरं ॥ ६८ ॥ मनसार्चित्यकु
र्वीतधनत्यागंहितत्परः ॥ पात्रालाभेततःकुर्यात्तत्तत्पात्रानुसारतः ॥ ६९ ॥ धनत्यागंपुमान्शक्त्यायाव
त्संकल्पमात्मनः ॥ नविलंबंप्रकुर्वीतनरःसुकृतकर्मणि ॥ ७० ॥ पापकर्मणिसंप्राप्तेविलंबेनैवतच्छुभं ॥
इतिहासंपुरावृत्तमस्मिन्नर्थेशृणुद्विज ॥ ७१ ॥ पुरायुधिष्ठिरोराजाधर्मात्मानित्यदानवान् ॥ कृतवान्
स्वगृहद्वारिमहाभेरींनृपोत्तमः ॥ ७२ ॥ यःकश्चिदर्थीमासेतिसहन्यान्द्भेरिकामिमां॥आहूयनिकटेस्वस्यश्रु
त्वावांच्छितमर्थिनः ॥ ७३ ॥ पूरयिष्यामितद्वांच्छांयावच्छक्नोमिनान्यथा ॥ इत्यासीतद्धनंस्फीतंसर्व

दिक्षुचविश्रुतम् ॥ ७४॥ श्रुत्वाकश्चिद्द्विजोभ्यागात्स्वयमेवहरिस्तुयः ॥ गतवास्तत्परीक्षार्थंनिशीथेभेरि
माहनत् ॥७५॥ श्रुत्वैवभेरिनादंसप्रेषयामाससत्वरं ॥ स्वदूतानर्थिनोराजसकाशेज्ञातुमीप्सितं ॥७६॥
तेतूर्णविप्रमागत्यज्ञात्वातस्यमनोगतं ॥ राज्ञेनिवेदयामासुरथराजावदत्स्वयं ॥ ७७ ॥ विज्ञापयतमेवा
क्यंद्विजायास्मैसुसन्नताः ॥ प्रातरागच्छभोविप्रयथेष्टंदास्यतेधनं ॥ इतितद्वचनंदूताविप्रायाहुःसुसन्नताः
७८ ॥तदैवभीमसदनंगतवान्याचकोद्विजः ॥ तद्द्वारिसंस्थितांभेरींन्यहनत्तद्ध्वनितथा ॥ ७९ ॥ भी
मआश्रुत्यदूतैस्तंद्विजमानीयसत्वरं ॥ तदीप्सितंधनंप्रदाद्धर्षभेरींततःपरं ॥ ८० ॥ शीघ्रनावादयामा
सतत्ध्वनिंश्रुतवान्नृपः ॥ भीमस्याद्यनिशीथेस्मिन्किमासीद्धर्षकारणम् ॥८१॥इतिसंचिंत्यदूतान्स्वान्भी
मायप्राहिणोद्द्रुतं ॥ भीमस्तानाहमेहर्षोमहानद्याभवद्ध्रुवं ॥ ८२ ॥ यद्धर्मराजोनिश्चित्ययावत्प्रातःस्व
जीवनं॥ अतएवोक्तवान्विप्रमर्थिनंगृहमागतं ॥८३ ॥प्रातर्याहिचदास्यामितवेष्टंधनमित्युत ॥ इतिनिश्चय
माकर्ण्यधर्मराजस्यजीविते ॥८४॥ हर्षोमहानभूदद्यतेनभेरिमवादयं ॥ भीमस्यतद्वचोदूताःशीघ्रमावेद
यन्नृपे ॥ ८५ युधिष्ठिरोथधर्मात्मापश्चात्तापेनतप्तवान् ॥ तदानीमेवभीमस्यगृहमागत्यतंद्विजं ॥८६॥
बहुक्षमापयामासदत्वातस्मैधनंबहु ॥ नजग्राहधनंतत्तुदीयमानंमुहुर्मुहुः ॥ ८७ ॥ भीमेनापूरितंमेद्य
वांछितंनृपसत्तम ॥ सर्वथानगृहीष्यामितृष्णापुण्यस्यनाशिनी ॥ ८८ ॥ अवश्यकंहियाचेतना
धिकंब्राह्मणःक्वचित् ॥ अतितृष्णापरोयस्तुसस्तेनोदंडमर्हति ॥ ८९ ॥ ततोभीमंसमालिंग्यवत्स

मेत्वंगुरुर्महान् ॥ यदित्थंकृतवान्श्रेयइहलोकेपरत्रच ॥ ९० ॥ मुहुरश्रुपरीताक्षोहाहावंचितइत्यपि॥
पश्चात्तापीमहाराजाशंसमानोनुजंस्वकम् ॥ ९१ ॥ धनमस्यश्रुतंलोकेधन्यमस्यचजीवितम् ॥ यत
इत्थंविवेकोस्यधिङ्मेधिग्जीवितंश्रुतम् ॥ ९२ ॥ एतस्मिन्नंतरेविप्रोबभौकृष्णःस्वयंद्विजः ॥ नीलमेघरु
चिःश्रीमान्पीतवासाश्चतुर्भुजः ॥ ९३ ॥ सांत्वयामासराजानंमारोदीर्मातपोनृप ॥ धर्मोविलंबोनोका
र्यइतिवेदयितुंतव ॥ ९४ ॥ ब्राह्मणोभूयनृपतेतवांतिकमुपागमम् ॥ धर्मस्येहविलंबेनवंचिताबहवोन
राः ॥ ९५ ॥ पुराकृतयुगेराजन्संजयोवैश्यकोभवत् ॥ मिथिलायांमहावित्तःसजगामाशुजाह्नवीम्
॥ ९६ ॥ बहुवित्तसमायुक्तःसूर्यग्रहणहेतुतः ॥ दातुमेवानयद्वित्तंब्राह्मणेभ्योथगाःशुभाः ॥ ९७ ॥
ग्रहकालेततःप्राप्तेस्नातुंगंगांविवेशसः ॥ प्रविष्टमात्रंवैश्यंतंनक्रःपादेग्रहीद्बलात् ॥ ९८ ॥ निनायजल
मध्येतंसममारततःपरम् ॥ हाहाकारोमहानासीत्संजयोमृतइत्यथ ॥ ९९ ॥ सुधर्मातत्सुतोराजन्त
द्वित्तमखिलंददौ ॥ श्रेयांसिबहुविघ्नानिभवंतिमहतामपि ॥ २०० ॥ तस्माद्दानविलंबेनवंचिताबहवो
भुवि ॥ सर्वदैवप्रतीक्षंतेमृत्यवःकालमात्मनः ॥ १ ॥ श्वासोबहिर्गतोयस्तुप्रविशेन्मुखमात्मनः ॥
तथैवांतर्गतःश्वासोबहिर्यास्यतिवानवा ॥ २ ॥ विश्वासईदृशोनास्तिकिंनुप्रातर्जिजीविषुः ॥ प्राणो
हिजीवितंलोकेसचप्राणःसमीरणः ॥ ३ ॥ समीरणाच्चलनास्तियज्जीवातितदद्भुतम् ॥ चक्षुःश्रोत्रंमनो
वाचाप्राणश्चैवतुपंचमः ॥ ४ ॥ पंचैतादेवताःपूर्वंस्वश्रेष्ठत्वेत्ववीवदन् ॥ ततोदेहस्थितास्तास्तुप्राणमेन

मचीकरन् ॥ ५ ॥ यस्मिन्नुत्क्रांतिमापन्नेदेहोयंपतस्यतिध्रुवम् ॥ सएवोत्कथंभवेल्लोकेइत्युक्त्वावाक्ततो
गमत् ॥ २०६ ॥ अवदन्नवदेहोयंपिवन्नश्नन्नवस्थितः ॥ ततश्चक्षुरुदक्रामत्ततोपश्यन्पिवन्नपि
॥ २०७ ॥ अश्नन्नवस्थितोदेहस्ततःश्रोत्रंबहिर्गतम् ॥ अशृण्वन्नेवदेहोयंपिवन्नश्नन्नवस्थितः ॥
॥ २०८ ॥ ततोमनउदक्रामदतिष्ठन्मीलितोयथा ॥ अश्नन्नेवपिबन्नेवदेहोयंराजसत्तम ॥ २०९ ॥
चत्वारोपिगताःपश्चादपश्यन्नवदंस्तथा ॥ अशृण्वन्मीलितस्तस्थौपिवन्नश्नन्नवस्थितः ॥ २१० ॥ ततः
स्थितेषुदेहेस्मिन्दैवतेषुचतुर्ष्वपि ॥ उदक्रामदहोप्राणःस्ततएवतुदेवताः ॥ ११ ॥ यतमानाअपिस्थातुं
नशेकुःप्राणवर्जिताः ॥ ततआश्वपतद्देहःपतितोपिव्यशीर्यत ॥ १२ ॥ ततःशरीरनाम्नासौख्यातोभू
द्विदुषांमुखे ॥ पुनरेवविवादंताश्चक्रुःश्रेष्ठत्वमात्मनः ॥ १३ ॥ मेनिरेथपुनस्तस्मिन्प्रविष्टेदेहउत्थितः
॥ भविष्यतिसएवास्तुश्रेष्ठोस्मास्वपिपंचसु ॥ १४ ॥ ततोवाक्प्राविशद्देहेशिश्येदेहस्तथैवसः ॥ ना
वस्थातुमभूच्छक्तोविनाप्राणंतुवागपि ॥ १५ ॥ चक्षुरादित्रयंपश्चात्क्रमेणप्राविशत्यपि ॥ नोत्तस्थौपति
तोदेहस्ताअप्यस्मिन्नवस्थिताः ॥ १६ ॥ चतस्रोमिलिताश्चापिनशेकुःस्थातुमप्यहो ॥ ततःप्राणःस्वयं
देहप्रविष्टोह्येकएवच ॥ १७ ॥ प्रविष्टमात्रउत्तस्थौप्राणोराजाप्यवस्थितः ॥ पिबतिस्मोदकंपश्चादश्नातिस्मा
न्नमप्यथ ॥ १८ ॥ ततोदेवाःप्रणेमुस्तंक्ष्मापयंतोमुहुर्मुहुः ॥ सर्वेषांचेतनानांत्वंमुख्योसिव्यापकोपिच
॥ १९ ॥ तवदासावयंदेवत्वमस्माकमसीश्वरः ॥ ततएवात्रलोकेहियावत्प्राणंनृजीवितं ॥ २० ॥ वृ

क्षादिःस्थावरेष्वस्यव्याप्तिःसर्वेषुजंतुषु ॥ किमुश्वासवतांराजन्जंगमानांनृणामिह ॥ २१ ॥ पंचधा संस्थितोह्येषधारयत्यखिलंजगत् ॥ प्राणापानौव्यानोदानौसमानइतिपंचधा ॥ २२ ॥ हृदिप्राणोगुदे ऽपानःसमानोनाभिसंस्थितः ॥ उदानःकंठदेशस्थोव्यानःसर्वशरीरगः ॥ २३ ॥ नासाद्वाराद्बहिर्याति प्राणोहंकारमावहन् ॥ तेनायंमुखमाप्नोतिततोपानश्चकर्षति ॥ २४ ॥ आकृष्टमात्रएवासौप्राणआयु र्विवर्धयेत् ॥ पुनर्विशतिदेहेस्मिन्सकारंमुहुरुच्चरन् ॥ २५ ॥ हंसहंसेत्येवमंत्रंजीवोजपतिसर्वदा ॥ हंसनामाहमेवात्रप्राणाचार्योव्यवस्थितः ॥ २६ ॥ यत्रयत्रनयाम्येनंतत्रतत्रायमेवतु ॥ जीवमादायमामेति नासिप्रोतोयथावृषः ॥ २७ ॥ चराचरेषुसर्वेषुकोपिनास्तीदृशःपुमान् ॥ यःप्राणस्यवशेनास्तिततःप्राणोवरः स्मृतः ॥ २८ ॥ सप्राणोमद्वशेस्तीवसूत्रंसर्वेषुदेहिषु ॥ ततोहंसर्ववेदेषुख्यातोवैपुरुषोत्तमः ॥ २९ ॥ यथावदतिकाकोयंतद्धिमात्राद्वयंस्मृतं ॥ सैकादीर्घाभवेन्मात्राताद्दृशःप्राणउच्यते ॥ ३० ॥ षट्प्राणाः स्युःपलंमानंतानिषष्टिर्घटोभवेत् ॥ वासरःषष्टिघटिकोमासःस्यात्रिंशतानुतैः ॥ ३१ ॥ तेतुद्वादशवर्षं स्याद्देवानांतद्दिनंभवेत् ॥ कृतंत्रेताद्वापरंचकलिश्चेतिचतुर्युगं ॥ ३२ ॥ चत्वारित्रीणिद्वेचैकंकृतादिषुयथा क्रमं ॥ संख्यातानिसहस्राणिशतानिद्विगुणानिच ॥ ३३ ॥ एवंद्वादशसाहस्रंवर्षाणित्रिदिवौकसां ॥ चतुर्युगमितिख्यातंतानिचाप्येकसप्ततिः ॥ ३४ ॥ मन्वंतरमितिप्रोक्तंतत्संध्याकृतसंमिता ॥ चतुर्दशकमे वंस्यान्मनूनांब्रह्मणोदिने ॥ ३३५ ॥ चतुर्युगसहस्राणितस्यमानंप्रकीर्तितम् ॥ तावत्येवभवेद्रात्रिः

सकल्पःप्रोच्यतेबुधैः ॥ २३६ ॥ त्रिंशत्षट्चसहस्राणिकल्पानांस्याद्यदातदा ॥ ब्रह्मणःप्रलयःप्रोक्तःपरं
ब्रह्मायुरुच्यते ॥ ३७ ॥ सर्वेब्रह्मवशाजीवाःप्राणाब्रह्मणिसंस्थितः ॥ ब्रह्मापिप्राणसंस्थोयंमिथस्तौदेह
धारकौ ॥ ३८ ॥ ब्रह्माप्राणंविनाशीर्येत्प्राणोब्रह्मविनाम्रियेत् ॥ अतस्तौसदृशावेवधारयेतेजगत्रयम्
॥ ३९ ॥ आयुर्षोतेतयोर्हितासर्वदैवाहमेकलः ॥ अन्येषांकिमुजीवानांनृपतेतत्वतःशृणु ॥ ४० ॥
षट्शतानिदिवारात्रौसहस्राण्येकविंशतिः ॥ प्राणाभवंतिजीवानांहंसमंत्रजपोहिसः ॥ ४१ ॥
अजपानामगायत्रीममध्यानयुताहिसा ॥ जपितामोक्षदैवस्यान्नान्यथातुकथंचन ॥ ४२ ॥ यावंतो
यस्यहिप्राणाजीवितंनियतंमया ॥ तावदेवात्रतिष्ठामिपूर्णेतस्मिन्प्रयामिच ॥ ४३ ॥ तदैववायुरन्वे
तिजीवमादायसत्वरम् ॥ यस्तुकर्मार्जितोदेहस्तंनयामिद्रुतंहितम् ॥ ४४ ॥ विषशस्त्राग्निरोगाद्यामृत्य
वःसर्वएवहि ॥ तत्तत्कर्मवशाज्जीवेसृजाम्येकोहमेवतु ॥ ४५ ॥ भुंजानान्हन्मिसुप्तांश्चास्त्रियालापं
प्रकुर्वतः ॥ गच्छतस्तिष्ठतःकांश्चिद्ददतश्चतथापरान् ॥ ४६ ॥ पुण्यंकर्मपापकर्मकुर्वतस्तान्निहन्मिच ॥
घ्नंतमेवंजनान्सर्वान्पश्यन्नापिनपश्यति ॥ ४७ ॥ ममामायाबलंह्येतद्दुरंतंविद्धिमारिष ॥ मृतंपितरमा
लोक्यपुत्रोजीवितुमिच्छति ॥ ४८ ॥ धनान्यर्जतिभूयांसिगृहारामान्करोतिच ॥ वर्धयत्यधिकंस्नेहं
पुत्रदारगृहादिषु ॥ ४९ ॥ अद्यतोप्यधिकंश्वोमेवृद्धिर्भूयाद्दिनेदिने ॥ इत्यासक्तधियामृत्युंनपश्यत्यावि
दूरगम् ॥ २५० ॥ इदमेकंवचोमेतेमनस्यस्तुयुधिष्ठिर ॥ यद्भावनान्नरोयातिशाश्वतंमामकंपदम् ॥

॥ ५१ ॥ यदनित्यंविजानासितत्रवांच्छांपरित्यज ॥ यत्तुनित्यंविजानासितत्रबुद्धिंस्थिरांकुरु ॥ ५२ ॥
मन्मनाभवमद्भक्तोमद्याजीमांनमस्कुरु ॥ मामेवैष्यसिसत्यंतेप्रतिजानेप्रियोसिमे ॥ ५३ ॥ सर्वधर्मान्प
रित्यज्यमामेकंशरणंव्रज ॥ अहंत्वासर्वपापेभ्योमोक्षयिष्यामिनान्यथा ॥ ५४ ॥ यत्करोषियदश्नासि
यज्जुहोषिददासियत् ॥ यत्तपस्यसिकौंतेयतत्कुरुष्वमदर्पणं ॥ ५५ ॥ मदर्पितमनास्त्वंहिसर्वंदुर्गंतरि
ष्यसि ॥ युधिष्ठिरप्रतिज्ञामेनमेभक्तःप्रणश्यति ॥ ५६ ॥ मानुषंमांविजानंतियेमूढाःपापबुद्धयः ॥ तेंऽधे
तमसिमज्जंतियतोनावर्ततेपुनः ॥ ५७॥ नमांकर्माणिलिंपंतिनमेकर्मफलेस्पृहा ॥ इतिमांयोभिजानाति
कर्मभिर्नसबध्यते ॥ ५८ ॥ पापकार्येविलंबःस्यान्नतुधर्मेकथंचन ॥ मुक्ताःपापविलंबेनपितरोनरकात्पुरा
॥ ५९ ॥ वक्ष्यामिगोपतेर्वृत्तंशृणुराजन्समाहितः ॥ ६० ॥ इतिश्रीवाराहपुराणेचा०म०त्रयोविंशो
ऽध्यायः ॥ २३ ॥ श्रीकृष्णउवाच ॥ पुराविदर्भनगरेगोपतिर्नामवैश्यकः ॥ धनवान्रूपसंपन्नस्तरुणो
धर्मतत्परः ॥ १ ॥ एकदासखिभिःसार्धंगच्छन्हर्म्येस्थितांस्त्रियं ॥ सुस्नातांगणिकांकांचिच्छोषयतींस्वका
न्कचान् ॥ २ ॥ पीनोन्नतकुचांशुभ्रांसुश्रोणींकांचनप्रभां ॥ बिंबाधरांसुनयनांकस्तूरीतिलका
न्वितां ॥ ३ ॥ भूषणैरपिहीनांगींभूषितामिवविद्युतः ॥ हरंतींचमनोयूनांतनुमध्यांकृशोदरीं ॥ ४ ॥
सुसूक्ष्मवसनांदृष्ट्वाविद्धःकामेषुणाभवत् ॥ अहोएनांचारुहास्यांकदालिंगामिकामिनीं ॥ ५ ॥ कदा
शाम्येन्ममस्वांतेतापोयोजनिदुःसहः ॥ इतिकामातुरोभूत्वातद्गृहाभिमुखोभवत् ॥ ६ ॥ तदैवपितर

स्तस्यरुरुदुःसुस्वरंनृप ॥ यमदूतैर्नीयमाना पूयशोणितकर्दमे ॥ ७ ॥ मंदभाग्यावयंहंतयेषामन्वयई
दृशः ॥ जातोयंगणिकागामीयेनाप्तमीदृशंफलं ॥ ८ ॥ तानाहुर्यमदूतास्तेमारोदिथसुदीनकाः ॥
व्यवधानेनयद्दुःखंतद्दुःखंनैवचिंतयेत् ॥ ९ ॥ हरेर्लीलाविचित्रास्तिनाविघ्नःकिंभविष्यति ॥ यदैवगोप
ति संगंकरिष्यतितयासह ॥ १० ॥ तदैवभवतांपातोभविष्यत्यत्रनान्यथा ॥ अस्त्यत्रव्यवधानंहिपूर्वक
ष्टमनर्थकम् ॥ ११ ॥ धैर्यंकुरुतमाशोकोभवतांनिर्गतागसां ॥ गोपतिंत्वागतंवीक्ष्यदूरतोगणिका
तदा ॥ १२ ॥ हृष्टातीवबभूवाशुधनिकंगृहमागतं ॥ पूजयामासविधिवत्तैलाभ्यंगमचीकरत् ॥ १३ ॥
सुस्नातःपुष्पधूपाद्यैर्भूषितश्चविभूषणैः ॥ सुवासाशयनारूढोयावत्स्पृशतितांकरे ॥ १४ ॥ तावद्दैवेन
नष्टोभूद्दीपोरतिगृहेस्थितः ॥ शालायांदीपमानेतुंयावद्गतवतीस्वयं ॥ १५ ॥ तावत्तस्याःपपाताशुपा
दःसर्पस्यपुच्छके ॥ क्रुद्धस्तामदशत्सर्पःसापपातातिविह्वला ॥ १६ ॥ हाहाकारोमहानासीद्गणि
काशुममारच ॥ गोपतिस्तांसमालोक्यवमंतींरुधिरंबहु ॥ १७ ॥ करालवदनांदृष्ट्वाभीतोयंव्रीडितो
भवत् ॥ दृष्ट्वादृष्ट्वामुहुस्तांतुविवर्णांविकृताननां ॥ १८ ॥ जुगुप्सन्स्वंसधर्मात्मास्तुयमानोजना
र्दनं ॥ अहोदयालुःसर्वात्मानूनंमेपरमःसुहृत् ॥ १९ ॥ नरकेपतमानंमांस्वीयैःपितृगणैःसह ॥
उज्जहारसुदुर्बुद्धिंविश्वात्मासकृपानिधिः ॥ २० ॥ईदृशेवदनेहाहारुधिरेणपरिप्लुते ॥ श्लेष्माविलेसुदुर्बुद्धेर्वां
छासीन्ममचुंबने ॥ २१ ॥मांसग्रंथीस्तनौगुह्यंमलमूत्रप्रपूरितं॥ईदृशेमांसपिंडेमेमलमूत्रादिपूरिते ॥ २२ ॥आ

सीत्सुखार्थिनोवांच्छाधिग्धिङ्मोहस्यजृंभितम् ॥ लालापूर्णेमुखेत्वस्मिन्नस्थिभिःपूरितोदरे॥ २३॥दुःख
हेतोःकथंतुस्यात्सुखोत्पत्तिर्दुरात्मनः ॥ जीवच्छवेपिदेहेस्मिन्ममताहंमतिःकथं ॥ २४ ॥ जुगुप्सिते
रसोत्पत्तिःशृंगारादेःकथंभवेत् ॥ अहोमायाबलंविष्णोर्बध्वाक्षिपतिसंसृतौ ॥ २५ ॥ विषयैर्नष्टनेत्रस्य
कार्याकार्यमजानतः ॥ विवेकेनापिशून्यस्यरक्षकोजगदीश्वरः ॥ २६ ॥ एवंपश्चात्तपन्नेवगतःस्वसदनं
प्रति ॥ तदैवसर्वंविप्रेभ्योदत्वागाद्दृषिसन्निधौ ॥ २७ ॥ तपोदुष्करमारंभेसपत्नीकोथगोपतिः ॥
देहांतेजग्मिवान्राजन्पितृभिर्ममंदिरम् ॥ २८॥ एवंपापविलंबेनधर्मस्यत्वरयापिच ॥ बहवःस्वहितंप्रा
पुरितरेचविपर्ययं ॥ २९ ॥ तस्मादेवंविनिश्चित्यसर्वदाधर्ममाचर ॥ निवृत्तःपापकर्मभ्यःप्राप्स्यसित्वंपरं
पदं ॥ ३० ॥ युधिष्ठिरउवाच ॥ त्वयाप्लवेनभगवन्निस्तीर्णोमोहसागरः ॥ नमामित्वांनमामित्वां
नमामित्वांमुहुर्मुहुः ॥ ३१ ॥ समानोदानव्यानानांकिंदेहेकार्यमीश्वर ॥ वृक्षादिस्थावरेचापिकिंप्राणाः
पंचकुर्वते ॥ ३२ ॥एतदाख्याहिमेभूमन्श्रोतुंकौतूहलंहिमे ॥ श्रीकृष्णउवाच ॥उदानःकंठदेशस्थोमुख
व्यापारकारकः ॥ ३३ ॥ जिह्वोष्ठादीनांचेष्टासुप्रेरकःसर्वदाहिसः ॥ चर्वणंगिलनंतस्यवर्णाभिव्यक्तिरेव
च ॥ ३४ ॥ उदानस्यफलंप्राहुर्देहतत्वविशारदाः ॥ समानोनाभिदेशस्थोवर्धयेज्जाठरानलं ॥ ३५॥
विण्मूत्रंचतथारेतःस्वस्वस्थानेदधातिच ॥ भुक्तस्यहिरसंसर्वंव्यानःसर्वशरीरगः ॥ ३६ ॥ सर्वां
गेषुदधात्येवसर्वदास्मिन्शरीरके ॥ नागश्चकृकलःकूर्मोदेवदत्तोधनंजयः ॥ ३७ ॥ अन्येपिमारुताःपंच

देहेस्मिन्सर्वदास्थिताः ॥ विभागंसप्तधातूनांकुर्वंतोत्रसदोद्यताः ॥ ३८ ॥ स्थावरेष्वपिसर्वेषुमलंमुच
त्यपानकः ॥ पत्रपुष्पफलादीनिस्थावराणांमलाःस्मृताः ॥ ३९ ॥ वृक्षादीनांमुखंमूलंतेनगृण्हातिवैजलं
॥ जलाकर्षकरोत्यत्रप्राणोथोदाननामकः ॥ ४० ॥ मूलग्रंथिस्थितंतोयंसमानंमध्यसंस्थितं ॥ प्रापय
त्यनिशंव्यानःसर्वत्रप्रापयेद्रसं ॥ ४१ ॥ त्वग्वल्कलादिगात्रेषुपंचनागादयःक्रमात् ॥ तिष्ठंतोविभजं
त्येवजंतुदेहेयथातथा ॥ ४२ ॥ एवंचराचरंसर्वंप्राणोव्याप्नोतिसर्वतः ॥ इतितेगुह्यमाख्यातंभक्त्यापृष्टं
त्वयायतः ॥ ४३ ॥ इतिहासमिमंपुण्यमावयोःशृणुयान्नरः ॥ सोपिमद्भक्तिमाप्नोतिमुक्तिंचांतेनराधि
प ॥ ४४ ॥ ॥ सर्पउवाच ॥ एवंतेकथितंविप्रपुरावृत्तमिदंशृणु ॥ इदानींकथयिष्यामिशक्तिदानफ
लंतव ॥ ४५ ॥ पुरासीत्तारणोनामकांच्यांविप्रःसुदुर्बलः ॥ कृषिजीवीविष्णुभक्तोवेदवेदांगपारगः ॥
॥ ४६ ॥ गृहेनिवसतस्तस्यपितुःश्राद्धदिनंनृप ॥ प्राप्तमासीत्ततःपत्नींपर्यपृच्छत्सुदीनधीः ॥ ४७ ॥
पितुःक्षयाहःश्वःप्राप्तःसतुकर्तव्यएवहि ॥ कोटिजन्मसुचांडालोजायतेतदतिक्रमात् ॥ ४८ ॥ किं
चिदस्तिगृहेसाध्विविप्रान्भोजयितुंगृहे ॥ उत्तिष्ठभांडानीक्षस्वयत्स्यात्तेनैवकारयेत् ॥ ४९ ॥ वयंय
दन्नाःपितरस्तदन्नाइतिहिश्रुतिः ॥ यथाशक्त्याप्रकुर्वीतवित्तशाठ्यंनकारयेत् ॥ ५० ॥ दरिद्रावयमत्य
र्थंयथाशक्त्यैवकुर्महे ॥ नह्यत्रधर्मबाधोस्तिशक्तौसत्यांसहिस्मृतः ॥ ५१ ॥ भर्तुर्वचनमाकर्ण्यगृहभांडा
निसर्वशः ॥ शोधयामासतत्पत्नीराजिकाप्रस्थमैक्षत ॥ ५२ ॥ सातद्राजिकमनीयस्वभर्तुर्भांडमं

तिके ॥ पश्यप्रस्थमिदंस्वामिन्राजिकानांगृहेस्थितं ॥ ५३ ॥ नान्यत्किंचिन्नपश्यामिमार्गमाणामुहु
र्मुहुः ॥ दृष्ट्वातत्तारणोविप्रःपर्यश्रुश्चिरमारुदत् ॥ ५४ ॥ धिग्जीवितमिदंहाहाधनहीनस्यपापिनः ॥
रुदंतंबहुधातंतुतत्पत्नीसुमनास्ततः ॥ ५५ ॥ सांत्वयामासधर्मज्ञावचोभिर्मुनिसंमतैः ॥ सुमनाउवाच॥
कुतोरोदिषिधर्मज्ञनादत्तमुपतिष्ठति ॥ ५६ ॥ दत्तंचापिहिकालेनफलतिस्वेच्छयानतत् ॥ तत्तत्कर्मफ
लंपक्कमीश्वरोहिददातिहि ॥ ५७ ॥ देशकालौतथाकर्मभक्त्यादीनप्यपेक्ष्यच ॥ सर्वेषांफलदाता
स्तिनान्यथातुकदाचन ॥ ५८ ॥ अनादिकालजस्त्वेवंसंकल्पःपरमात्मनः ॥ स्वातंत्र्यात्तस्यनान्योस्ति
कर्तुमस्यविपर्ययं ॥ ५९ ॥ नजातोनास्तिनाभावीविष्णुनासदृशःपुमान् ॥ कुतःस्यादधिकस्तस्मा
दितिवेदवचोमहत् ॥ ६० ॥ तत्संकल्पमतःकेचिन्नान्यथाकर्तुमीशते ॥ अपिब्रह्मादयःसर्वेमिलिताः
सर्वदानवाः ॥ ६१ ॥ स्वकीयश्वासमोक्षेपिनशक्तास्तत्रकाकथा ॥ लोकरीत्यनुसारेणस्त्वयमप्याहरा
घवः ॥ ६२ ॥ वनवासेत्वुभुक्षार्थंलक्ष्मणंस्वानुजंपुरा ॥ पृथिव्यामन्नपूर्णायांत्वयमन्नस्यकांक्षिणः ॥ ६३ ॥
सौमित्रेनूनमस्माभिर्नब्राह्मणमुखेहुतं ॥ इतिदेवःस्वयंप्राहनित्यानंदैकविग्रहः ॥ ६४ ॥ अतोबुद्धिंसमा
धत्स्वत्यजशोकंमहामते ॥ ततउत्थायशनकैर्गत्वाब्राह्मणमंदिरं ॥ ६५ ॥ आमंत्र्यताविप्रौद्वौसुष्वापागत्य
वैगृहे ॥ पिष्टातराजिकाःसर्वास्तोयेपिंडान्बबंधह ॥ ६६ ॥ देवान्पितॄन्समाहूयविप्रयोश्चविधा
नतः ॥ पिंडद्वयंददौताभ्यांभक्त्याविष्णुंस्मरन्हृदि ॥ ६७ ॥ सर्वसाक्षीहरिस्तत्रस्वयमाविरभूत्प्रि

डके ॥ तर्पयामासतोविप्रोयथापीयूषपानतः ॥ ६८ ॥ तदानींमेवदुग्धाब्धौशयानःपरमेश्वरः ॥
करुणार्द्रेणमनसाचकारस्मितमुत्तमं ॥ ६९ ॥ तत्संवीक्ष्यरमादेवीनत्वाहरिमपृच्छत ॥ आकस्मिकं
स्मितंतेद्यज्ञातुमिच्छामितद्वद ॥ ७० ॥ ततःसकृपयाचख्यौतत्तारणविचेष्टितं ॥ ततोदेवीहरिंनत्वा
पप्रच्छातीवविस्मिता ॥ ७१ ॥ ब्रह्मरुद्रादयोदेवामत्कृपांसमभीप्सवः ॥ ब्रह्माणमथवारुद्रंचंद्रंशक्रं
वियमं ॥ ७२ ॥ कामयेकर्तुमेतेषांतंकरोमिनसंशयः ॥ साहंसर्वसुरैर्वंद्यासर्वेषामिष्टदायिनी ॥ ७३ ॥
त्वत्प्रसादमपेक्षंतीपरिचर्यामिसर्वदा ॥ ईदृशस्तवभक्तस्यकथंदारिद्र्यमास्पृशेत् ॥ ७४ ॥ आज्ञापयाशु
देवेशतारणस्यगृहंव्रजे ॥ ॥ श्रीभगवानुवाच ॥ मात्विकाराजसाजीवास्तामसाश्चतथापरे ॥ ७५ ॥
अनादिकालतस्त्वेतंतत्तत्कर्माणिकुर्वते ॥ मद्भक्तिबहुलायेस्युःसात्विकास्तेप्रकीर्तिताः ॥ ७६ ॥ केवलं
विषयासक्तास्तत्तत्कामवशंगताः ॥ येभजंतिकदाचिन्मांकदाचिद्रुद्रमीश्वरम् ॥ ७७ ॥ रविं
विनायकंशक्तिंकदाचित्पूजयंतिहि ॥ ७८ ॥ मुक्तिवांछाविरहिताभ्रमंतीहपुनःपुनः ॥ ममद्रोहरता
नित्यंरुद्रादीनांचपूजकाः ॥ ७९ ॥ तत्तत्कामवशंयातादेहशोषंप्रकुर्वते ॥ स्वप्नवद्विषयान्भुक्त्वायांतितेनं
धंतमोध्रुवं ॥ ८० ॥ तथाह्यनंतान्नरकान्यान्गत्वाननिवर्तते ॥ तामसास्तेसमाख्याताःप्रत्येकंत्रिवि
धाइमे ॥ ८१ ॥ एवंनवविधाजीवाभ्रमंतिसृतिसागरे ॥ तत्रब्रह्मादयोदेवाज्ञेयाःसात्विकसात्विकाः ॥ ८२ ॥
गंधर्वाऋषयोभूपाज्ञेयाःसात्विकराजसाः ॥ मानुषेष्वेवजायंतेजीवाःसात्विकतामसाः ॥ ८३ ॥ त्रिवि

धाराजसाश्चापिमानुषेषुभवंतिहि ॥ दानवाःकलिमुख्याश्चज्ञेयास्तामसतामसाः ॥ ८४ ॥ गंधर्वायक्ष
रक्षांसिज्ञेयास्तामसराजसाः ॥ मानुषेष्वेवजायंतेजीवास्तामससात्विकाः ॥ ८५ ॥ इयंहिप्राकृतीसृष्टि
रतःस्यात्त्रिगुणात्मिका ॥ अतःसात्विकजीवेषुदेवेष्वपिनराधिप ॥ ८६ ॥ तमोनुवृत्तिरस्त्येवमुक्तौसा
विनिवर्तते ॥ एवंतामसजीवेषुकदाचित्सत्वदर्शनं ॥ ८७ ॥ लिंगभेदेचनास्त्येषांकदाचित्सत्त्वदर्शनं ॥
ब्रह्मरुद्रादयोदेवाःसदासात्विकसात्विकाः॥८८॥लभंतेमत्प्रसादेनस्वस्वधामानिसर्वदा॥कदाचिद्यदिजा
येतब्रह्मादीनांमदोद्भवः ॥ ८९ ॥ यदातान्शिक्षयाम्येवसन्मार्गंदर्शयामिच ॥ एषांसंपत्तिजनितोजायते
श्रीमदोमहान् ॥ ९० ॥ तेनैवविप्रान्देवांश्चमांचापिगणयंतिन ॥ तदातंश्रीमदंतेषामपहृत्यप्रद
र्शये ॥ ९१ ॥ दुःखंदारिद्र्यसंभूतंमनुष्याणांविशेषतः ॥ महानिष्टनिवृत्त्यर्थंदारिद्र्यंपरमौषधं ॥ ९२ ॥
येतुस्वल्पांश्रियंलब्ध्वाजायंतेश्रीमदान्विताः ॥ तेषांप्रायेणसंपत्तिंनोददामिसुमध्यमे ॥ ९३ ॥ प्रिय
व्रतध्रुवालर्ककार्तवीर्यांबरीषकाः ॥ पृथुप्रल्हादमांधातृययातिसगरादयः ॥ ९४ ॥ मरुतगयबाल्ही
ककुकुत्स्थभरतादयः ॥ एतेचान्येचबहवोविष्णुधर्मपरायणाः ॥ ९५ ॥ पंचरात्रेचविश्वस्ताभुक्त्वासु
विपुलांमहीं ॥ ममापरोक्षमासाद्यलेभिरेपरमंपदं ॥ ९६ ॥ मानुषाःसात्विकायेतुधनंलब्ध्वामदो
द्धताः ॥ भवेयुस्तानल्पधनान्करोमिसततंप्रिये ॥ ९७ ॥ येषांतुश्रीमदोनस्यात्तेषांदद्यामहंधनं ॥
अतोयंतारणोविप्रोममभक्तोप्यसंशयं ॥ ९८ ॥ लब्ध्वाधनंभवेदेवश्रीमदेनविमोहितः ॥ अवज्ञास्य

तिविप्रान्सततोऽनर्थंप्रपत्स्यते ॥ ९९ ॥ अतोनाहंददाम्यस्मैसंपत्तितारणायवै ॥ ॥ लक्ष्मीरुवाच ॥
दारिद्र्यपीडितेदेवतारणस्तवभक्तिमान् ॥ १०० ॥ यथासंपत्तिमान्भूयात्तथाज्ञापयमांविभो ॥ करुणा
जायतेतीवश्रुत्वातांतस्यदुर्गतिं ॥ १ ॥ ॥ सर्पउवाच ॥ ततआज्ञापयामासलक्ष्मींसंपत्तिदेवतां ॥
तारणस्यगृहंगंतुंभगवान्भूतभावनः ॥ २ ॥ ततस्तौब्राह्मणौविप्रभुक्त्काराजिकपिंडकौ ॥ पितरस्तृप्ति
मापन्नास्तुलसीदक्षिणांतथा ॥ ३ ॥ आशीर्भिरभिनंद्यामुजग्मतुःस्वगृहंप्रति ॥ तारणस्तुसपत्नीकःपि
तृशेषंतुपिंडकं ॥ ४ ॥ भुक्त्वासुष्वापशयनेव्रतस्थोदेवसन्निधौ ॥ सददर्शततःस्वप्नेवृद्धंविप्रंसितां
बरं ॥ ५ ॥ ऊचेकिमत्रसुप्तोसिशीघ्रंखनमहीमिमां ॥ वत्सतारणश्रांतोसिसुखमत्रचिरंवस ॥ ६ ॥
इत्युक्त्वाप्रययौविप्रोजागृतश्चापितारणः ॥ ततःसपत्नीमाहूयप्राहतस्याःपुरोखिलं ॥ ७ ॥ पत्न्युवाच
वदेत्स्वप्नेब्राह्मणोदेवताथवा ॥ तत्तथैवेतिविज्ञेयंतस्मात्खनमहीमिमां ॥ ८ ॥ ततःखनित्रमादायच
खानतारणोमुनिः ॥ धनकुंभंददर्शात्रदृष्ट्वाहृष्टमनाअभूत् ॥ ९ ॥ तारणस्यगृहंसर्वंततःसर्वसमृद्धि
मत् ॥ यथामहेंद्रनगरीतथासर्वत्रसंबभौ ॥ १० ॥ तत्पत्नीरुचिरापांगीसुमनाःसर्वभूषणा ॥ बभौवि
द्युदिवाकाशेसुशीलाधर्मचारिणी ॥ ११ ॥ तारणश्चमदोन्मत्तोब्राह्मणानवजज्ञिवान् ॥ स्वागतप्रश्न
मुत्थानंप्रणामालापसत्क्रियाः ॥ १२ ॥ नचक्रेचोदितंदानंयदिकिंचित्प्रयच्छति ॥ ब्राह्मणानवमन्यै
वदुरुक्तिंश्रावयत्तापि ॥ १३ ॥ वर्ज्यमानःसुमनसाभार्ययापिमुहुर्मुहुः ॥ सदन्नंस्वयमश्नातित्रिप्राया

न्यत्प्रयच्छति ॥ १४ ॥ एवमुत्सृष्टसद्वृत्तिस्तारणःश्रीमदोद्धतः ॥ अकरोद्दुर्मतिर्विप्रःशिश्नोदर
परायणः ॥ १५ ॥ क्षयाहेआगतेवर्षादेवंमनासिचिंतयत् ॥ राजिकागतवर्षेतुश्राद्धेदत्तामयायथा ॥
॥ १६ ॥ ईदृशंभाग्यमापन्नंतथाद्यापिसमाचरे ॥ संपदोभूयसीवृद्धिर्ममस्यात्तेनवैध्रुवम् ॥ १७ ॥ इ
तिमत्वाप्रियामूचेराजिकापिंडिकाःकुरु ॥ श्वःश्राद्धदिनमापन्नंयथापूर्वंसमाचर ॥ १८ ॥ ॥ सु
मनाउवाच ॥ ॥ स्वामिन्निदमयुक्तंमेभातिक्षाम्यसिचेद्ध्रुवं ॥ यत्कृतंवित्तशाठ्येनविपरीतफलंहितत्
॥ १९ ॥ हरेद्धर्मंहरेत्कीर्तिंहरेदायुर्हरेद्धनं ॥ हरेद्वंशंहरेद्दाक्ष्यंवित्तशाठ्यकृताक्रिया ॥ २० ॥ प
क्वान्नानिविचित्राणिअपूपांश्चापिसुंदरान् ॥ नानारसानिचान्नानिसुगंधिसुघनंघृतं ॥ २१ ॥ क्षीर
पाकामाषपाकायच्चान्यत्स्यात्पितृप्रियं ॥ कार्यंशक्तिमतिक्रम्यश्राद्धाहेदत्तमक्षयं ॥ २२ ॥ देवाश्चपि
तरःसर्वेकांक्षंतेश्राद्धभोजनं ॥ असंस्कृताःप्रमीताश्चनानायोनिगताअपि ॥ २३ ॥ अतआज्ञापयस्वा
मिन्यथालोकाश्चरंतिहि ॥ देशाचाराःकुलाचाराअपिधर्माविरोधिनः ॥ २४ ॥ कर्तव्याःकिमुवक्तव्यं
कार्याधर्मानुसारिणः ॥ सर्वदेशेषुसर्वेषांश्राद्धाहेदेवताःपितॄन् ॥ २५ ॥ तर्पयंतिसदन्नेनलोकाइतिस
तांस्थितिः ॥ इतिश्रुत्वावचःपत्न्यास्तारणःक्रोधमूर्छितः ॥ २६ ॥ स्त्रीणांवाचालताप्रायःपतिप्रीत्या
विवर्धते ॥ यदाज्ञप्तंस्वपतिनातथापत्नीसमाचरेत् ॥ २७ ॥ धर्मोवाप्यथवाधर्मस्तेनस्यादथवानवा ॥
पत्युराग्रहमित्थंसाज्ञात्वाचित्तेनदूयता ॥ २८ ॥ चकारराजिकापिष्टपिंडान्ब्राह्मणसंख्यया ॥ उपवि

ष्टेषुविप्रेषुआसनेषुयथाक्रमं ॥ २९ ॥ राजिकापिंडकांस्तांस्तुब्राह्मणानांपुरोददौ ॥ दृष्ट्वैवब्राह्मणाःसर्वे विस्मिताःखिन्नमानसाः ॥ ३० ॥ यजमानाज्ञयातत्तुचिक्षिपुःस्वमुखांतरे ॥ ततस्तीक्ष्णरसार्तास्तेश स्वाकोपेनतेगताः ॥ ३१ ॥ क्षीरसिंधुस्थितोविष्णुःप्राहसच्छ्रीसमीपतः ॥ पश्यदुर्विनयंलक्ष्मितार णस्यदुरात्मनः ॥ ३२ ॥ राजिकापिंडिकाःश्राद्धेब्राह्मणेभ्यःप्रदत्तवान् ॥ दग्धजिह्वारसेनास्याखिन्नाःश स्वाचतंययुः ॥ ३३ ॥ मुखंमेब्राह्मणादेविश्रुतिरित्याहशाश्वती ॥ अतस्तेषांप्रसादेनमत्प्रसादोभवे द्ध्रुवं ॥ ३४ ॥ तथैवतत्प्रकोपेनममकोपोपिजायते ॥ तेषांशापोहिमच्छापस्तेनसत्योभवेद्ध्रु वम् ॥ ३५ ॥ अतस्तस्यगृहाद्याहिलक्ष्मित्वंसहसंपदा ॥ पश्चात्तापेनतेनासौभार्यावाक्यंसंस्मरि ष्यति ॥ ३६ ॥ तथेतिप्रतिजग्राहलक्ष्मीर्हरिवचस्तदा ॥ निश्चक्रामगृहात्तस्यसदरिद्रोभवत्पुनः ॥ ३७॥ दस्युभिस्तुहृतागावोदिवारात्रौधनंहृतं ॥ स्त्रियासुमनसासार्धमुच्चैश्चुक्रोशतारणः ॥ ३८ ॥ अहोस्व प्नमिवद्रव्यंदर्शितंपरमात्मना ॥ दुर्विनीतस्यमूढस्यस्वहितंनविजानतः ॥ ३९ ॥ भार्यावाक्यमनादृत्य कुर्वतोवज्रमापतत् ॥ विप्रावमानजंत्वेतत्स्वल्पपुण्यस्यदुर्मतेः ॥ ४० ॥ दरिद्रस्यनमेदुःखमायुरन्नंप्रय च्छति ॥ विप्रावमानपाथोब्धिंयकथमेवमहंतरे ॥ ४१ ॥ प्रियात्वमसिकल्याणिबुद्धिश्चश्रेयसीतव ॥ अतःपरंयदाख्यासितत्करोमितवाज्ञया ॥ ४२ ॥ इतिभर्तुर्वचःश्रुत्वासुमनापतिमब्रवीत् ॥ आयुर्नौ चवृथायातंनकिंचित्स्वहितंकृतं ॥ ४३ ॥ अहर्निशंधनध्यानंनध्यातोविष्णुरीश्वरः ॥ चौरैरेवहृतंद्रव्यं

स्वेच्छयानार्पितंद्विजे ॥ ४४ ॥ शीतवातातपक्लेशास्तथावर्षाःसुदुःसहाः ॥ सोढास्तथापिनोतप्तंतपोवै मुनयोयथा ॥ ४५ ॥ क्षुरधारासुसंलग्नंयथास्वादयतोमधु ॥ सुखंस्वल्पंमहद्दुःखंसंसारेस्मिंस्तथासुखम् ॥ ४६ ॥ उपस्थजिह्वासंबंधिकिंचिदत्रसुखंभवेत् ॥ तदर्थंहिमहद्दुःखंप्राप्नोतीहसुमंदधीः ॥ ४७॥ पतंतिखड्गधारासुविशंतोमकरालयम् ॥ दस्युव्याघ्रादिसंकीर्णंमार्गंघोरंव्रजंतिते ॥ ४८ ॥ सुदुर्गमेपि सदनेदस्युरेकोव्रजत्यपि ॥ हस्तिव्याघ्रभुजंगादीन्घ्नंतोप्युपसरंतिहि ॥ ४९ ॥ पश्यंतोपिहतानेकान्भजंतिद्रव्यलोभतः ॥ कश्चिन्निराशोम्रियतेकश्चित्किंचिदवाप्नुयात् ॥ ५० ॥ प्राप्तंकश्चिन्नभुंक्तेचदुःखोकश्चिदसूयया ॥ असूयेर्ष्यादिदोषाणांसंसर्गान्मालिनोकृते ॥ ५१ ॥ सुखंदुःखायतेचित्तेज्वरितेशर्करायथा ॥ एवंबहुतरंदुःखंसंसारेसुखविप्रुषि ॥ ५२ ॥ इतिमूढस्यजायेतनपरंविदुषःक्वचित् ॥ तस्माद्यावोवनंशीघ्रंव्रजावःशरणंहरिं ॥ ५३ ॥ तरावःसंसृतिंसिंधुप्राप्स्यावःपदमव्ययम् ॥ इतिनिश्चित्यविप्रेभ्योदत्वासोपस्करंगृहं ॥ ५४ ॥ जग्मतुर्दंपतीशीघ्रंयत्रतेमुनिपुंगवाः ॥ तपश्चरंतिसततंप्रीणयंतिमुदाहरिं ॥ ५५ ॥ तारणस्तुसपत्नीकोदृष्ट्वातान्प्रणनामह ॥ पापार्णवेनिमग्नंमांकृपयादीनवत्सलाः ॥ ५६ ॥ समुद्धरतहेविप्राःपीड्यमानंदिनेदिने ॥ ततस्तेकृपयातस्मैमाभैरित्यभयंददुः ॥ ५७ ॥ सुखंतिष्ठवनेस्माभिःक्षणमात्रंहरिंभज ॥ तत्प्रसादात्तुतेसर्वेपापानिक्षयमाप्नुयुः ॥ ५८ ॥ नमोनारायणायेतिप्रणवेनसमन्वितम् ॥ मूलमंत्रमिमंप्राहुःश्रुतिशास्त्रविदोद्विजाः ॥ ५९ ॥ उद्यदादित्यसंकाशंज्ञानानंदस्वरूपिण

म् ॥ चतुर्भुजंपद्मगदाशंखचक्रधरंहरिं ॥ ६० ॥ श्रीभूम्याश्लिष्टगात्रंचवामदक्षिणतःक्रमात् ॥ ब्रह्म
रुद्रादिभिःसर्वैरुपास्यंसर्वदैवतैः ॥ ६१ ॥ एवंध्यायन्जपोनि त्यंत्रिसंध्यंमूलमंत्रकम् ॥ पापवार्धिंसमुत्ती
र्यशीघ्रंसिद्धिमवाप्स्यसि ॥ ६२ ॥ अर्धपुण्यहरेयंस्यात्सुमनास्तेपतिव्रता ॥ परिचर्यापरातेस्तुकृष्णचिंत
नतत्परा ॥ ६३ ॥ कुर्वाणएवकर्माणिविष्णुप्रीणनतत्परः ॥ सभार्योविष्णुलोकंत्वंप्राप्यतत्रचिरंस्थितः
॥ ६४ ॥ ततस्तुद्वापरस्यांतेसुदामात्वंहरेःसखा ॥ भूत्वातस्यप्रसादेनभुक्त्वाराज्यंसुपुष्कलम् ॥ ६५ ॥
अनयाभार्ययासार्धंततोमुक्तोभविष्यसि ॥ यद्गत्वाननिवर्ततेतद्धामपरमंहरेः ॥ ६६ ॥ प्राप्यतत्रास्त्रिया
साकंयथेष्टंभोगभाग्भवेः ॥ इतितेषांवचःश्रुत्वातारणोविगतज्वरः ॥ ६७ ॥ चचारभार्ययासार्धंदुश्चरं
वैष्णवंतपः ॥ ततःकालेनमहतामृत्युकालउपस्थिते ॥ ६८ ॥ स्मरन्विष्णोःपदांभोजंजहौप्राणान्सता
रणः ॥ विष्णुदूतास्ततस्तंतुसमाजग्मुर्विमानगाः ॥ ६९ ॥ सभार्यंतारणंतेतुसमारोप्यविमानके ॥ च
तुर्भुजंशंखचक्रगदापद्मधरंशुभम् ॥ ७० ॥ पीतांबरंसमाधायवैकुंठाभिमुखाययुः ॥ तारणस्त्वथतान्
दृष्ट्वासौम्यान्वैष्णवलिंगिनः ॥ ७१ ॥ पप्रच्छमांकुत्रलोकेयूयंनयथशोभनम् ॥ तेऽब्रुवन्मूलमंत्रस्यज
पेनक्षीणकिल्बिषम् ॥ ७२ ॥ नयामोविष्णुलोकंत्वांअल्पपुण्यैर्दुरासदम् ॥ पापिनोयेतुजीवाःस्युरथवा
स्वल्पपुण्यकाः ॥ ७३ ॥ यमलोकंप्राप्नुवंतिभुक्तभोगाःपुनर्भुवि ॥ कर्मशेषेणजायंतेशुभाशुभासुयोनि
षु ॥ ७४ ॥ इतितेषांवचःश्रुत्वातारणस्तान्प्रणम्यच ॥ प्रार्थयामासबहुधायमलोकस्यदर्शने ॥ ७५॥

भवंतोहिमहाज्ञानापुण्यपापस्यदर्शकाः ॥ पापिनोदर्शयध्वंमांकेनपापेनतेकथं ॥ ७६ ॥ पच्यंतेनरकेघा
रेद्रष्टुमिच्छामितानहम् ॥ ततस्तेवचनात्तस्ययमलोकस्यमार्गतः ॥ विमानंभ्रमयामासुःकौतुकाविष्टचे
तसः ॥ १७७ ॥ ॥ इतिश्रीवाराहपुराणेचातुर्मास्यमाहात्म्येचतुर्विंशोऽध्यायः ॥ २४ ॥ ॥
सर्पउवाच ॥ यमलोकंततोगच्छंस्तारणःपापिनोबहून् ॥ ताड्यमानान्ददर्शाग्रेबहुवायमकिंकरैः ॥
॥ १ ॥ ददर्शकंचिन्नक्षंतंस्वमांसंक्षुधयार्दितम् ॥ दह्यमानंकृशंदीनंताड्यमानंमुहुर्मुहुः ॥ २ ॥ दृष्ट्वा
पप्रच्छतान्दूतान्किमनेनकृतंपुरा ॥ दूताऊचुः ॥ पुरासीद्धनवानेषवैश्योवैदर्भदेशजः ॥ ३ ॥ कुमारना
मकश्चात्रबहुवित्तार्जनेरतः ॥ नान्नदानंसकृतवान्कदाचिद्द्विजपुंगवे ॥ ४ ॥ मृतस्यहृतवान्द्र
व्यमपुत्रस्यास्यभूमिपः ॥ कश्चिन्नैवददात्यस्मैश्राद्धेपिंडानपिक्वचित् ॥ ५ ॥ तेनायंपीड्यतेचैव
विह्वितारणनिश्चितम् ॥ सवजंश्चददर्शाग्रेताड्यमानंसमुद्गरैः ॥ ६ ॥ रोरूयमाणंबहुधादह्यमा
नंचवह्निना ॥ मुहुर्मुहुर्मुखेस्वस्यक्षिपंतंतर्जनीमपि ॥ ७ ॥ तंदृष्ट्वातारणःप्राहकिमनेनकृतंपु
रा ॥ ॥ दूताऊचुः ॥ ॥ आनर्तेषुपुराह्येषविष्णुशर्माद्विजोभवत् ॥ ८ ॥ धनवान्रूपसंपन्नः
शूद्रयाजनतत्परः ॥ नातिथ्यंकृतवान्क्वापिकस्यचिद्दुर्मदःसदा ॥ ९ ॥ पांथेभ्योदत्तवान्नैवस्वगृ
हेवसतिंशठः ॥ अवमेनेब्राह्मणांश्चनमस्कारंचकारन ॥ १० ॥ नाभ्युत्थानादिकंकिंचित्सदैवोन्मत्तभा
षणः ॥ एकदास्वगृहंप्राप्तंक्षुधार्तंवक्षियवेद्विजं ॥ ११ ॥ याचमानंमुहुर्भक्ष्यमेषदूराददर्शयत् ॥ अ

मदातुरिदंगेहंदेवदासस्यधीमतः ॥ १२ ॥ इत्यस्यवचनंश्रुत्वासाद्विजःक्षुधयार्दितः ॥ देवदासगृहंगं
त्वातस्मादन्नमयाचत ॥ १३ ॥ देवदासोददौतस्मैमिष्टमन्नंचतुर्विधं ॥ अर्चयित्वाचतंभक्त्याततोगात
पितोद्विजः ॥ १४ ॥ तेनपुण्यप्रभावेनविष्णुशर्माक्षुधार्दितः ॥ यदायदाजायतेहितदाहस्तंमुखेक्षिपत्
॥ १५ ॥ तेनास्यजायतेतृप्तिरेवंत्वंविद्धितारण ॥ सर्पउवाच ॥ ततोग्रेतारणोपश्यद्बाध्यमानंयमानु
गैः ॥ १६ ॥ लोहसंदंशकेनास्यमांसमुत्कृत्यवैमुहुः ॥ तन्मुखेक्षिप्यतेवापिताड्यतेमुद्गरैरपि ॥ १७॥
तंदृष्ट्वातारणोपृच्छत्किमनेनकृतंपुरा ॥ दूताऊचुः ॥ अयंसुदासनामाभूत्क्षात्रेयोमगधेषुवै ॥ १८ ॥
बृहद्रथनृपामात्योधनवान्पुत्रवान्रथी ॥ जिह्वालौल्येनकृतवान्स्वीयमांसस्यपोषणम् ॥ १९ ॥ दधि
क्षीरादियत्किंचित्स्वाद्वन्नंशर्करादियुक् ॥ नवनीतघृतादीनिमांसानिविविधानिच ॥ २० ॥ ब्राह्म
णान्वंचयित्वैवस्वयमश्नातिकिल्बिषी ॥ तेनपापेनमहताबाध्यतेयंमुहुर्मुहुः ॥ २१ ॥ खादयंतिस्वमां
सानिस्वदंशेनोद्धृतान्यपि ॥ हन्यंतेमुद्गरैश्चापिपश्येदंपापिनःफलम् ॥ २२ ॥ सर्पउवाच ॥ ततोप्य
ग्रेव्रजन्सोथपापिनंकंचिदैक्षत ॥ श्वभिर्गृध्रैस्तथाकाकैर्मांसंतस्यविदश्यते ॥ २३ ॥ तुद्यतेमर्मघातैश्च
क्रोशत्युच्चैश्चदीनवत् ॥ दृष्ट्वातंतारणःप्राहकिमनेनकृतंपुरा ॥ २४ ॥ दूताऊचुः ॥ दशार्णेषुपुराह्येषस्थ
पतिर्वरुणाभिधः ॥ पितरंमातरंचैववंचयित्वाशठोधनम् ॥ २५ ॥ गृहीत्वास्वयमश्नातिभार्यामादायवै
पृथक् ॥ दुःखितौपितरौत्यक्त्वासदापत्नीवशेस्थितः ॥ २६ ॥ दुरुक्तिंचापिवदतिस्वादुस्वाद्वत्तिच

स्वयम् ॥ तेनपापेनमहतादुःखशोकसमाकुलः ॥ २७ ॥ कुंभीपाकेस्थितोघोरेयावद्वर्षसहस्रकम् ॥ पापशेषेणतेनायंयातनांभुंक्तईदृशीम् ॥ २८ ॥ सर्पउवाच ॥ व्रजन्नग्रेततोपश्यत्तारणोमहदद्भुतम् ॥ चतुस्तंभेषुपुरुषंशृंखलाभिरधोमुखम् ॥ २९ ॥ दृढबद्धंनिरालंबंतस्यपृष्टेस्थितांस्त्रियं ॥ शृंखलानिगडैर्बद्धांमहापाषाणमस्तकां ॥ ३० ॥ तुद्यमानंश्वभिःकाकैस्तीक्ष्णदंष्ट्रैर्मुहुर्मुहुः ॥ तंदृष्ट्वामहदाश्चर्यंदूतान्पप्रच्छतारणः ॥ ३१ ॥ कृतंसभार्येणानेनदुष्कृतंतद्वदंतुमां ॥ दूताऊचुः ॥ पुरासुंदरनामाभूदुत्कलेषु विचक्षणः ॥ ३२ ॥ ब्राह्मणोधनसंपन्नोरूपवांश्वकृषीवलः ॥ सुकांतिनाम्नीतस्यासीत्पत्नीरेमेतयातुसः ॥ ३३ ॥ अथदैववशादेषउपयेमेन्यकामिनीं ॥ सुरुचिंनामतस्यांससक्तोनिंदत्सुकांतिकां ॥ ३४॥ अनागसंवृथावाग्भिरतक्ष्णोद्यावमानयन् ॥ सुरुच्यांकुरुतेप्रीतिमधिकांसमुहुर्मुहुः ॥ ३५ ॥ तथाद्वेषंसमधिकंसुकांत्यामाचरद्वृथा ॥ हीनवस्त्रंददात्यस्यैतथाहीनंचभोजनं ॥ ३६ ॥ हृताधिकारांतांचक्रेज्येष्ठांपत्नींससुंदरः ॥ सुरुचिश्चान्वमोदत्तंपीडयंतंचतांसतीं ॥ ३७ ॥ तेनपापेनमहतासुंदरःपीड्यतेह्यसौ ॥ तस्यपृष्ठेसमारूढासुरुचिःसासधर्मिणी ॥ ३८॥ पीड्यतेबहुधादूतैःक्लिश्यमानामुहुर्मुहुः ॥ सुकांतिस्तुहरिंचित्तेचिंतयानासतीतदा ॥ ३९ ॥ नाद्रुह्यत्तंपतिंसाध्वीसर्वमत्वाहरेर्वशे ॥ सुखस्यदुःखस्यनकोपिदातापरोददातीतिकुबुद्धिरेषा ॥ ४० ॥ जंतुर्यथायत्रचयत्करोतिशुभाशुभंतस्यफलंभुनक्ति ॥ कर्मानुसारेणहरिर्विधत्तेपक्वंफलंप्राणिषुसुष्टुदुष्टं ॥ ४१ ॥ नहिद्वेष्योभवेल्लोकेकश्चिन्मर्त्योथवापशुः ॥

योवाकोवापिदुःखस्यदातानापिहरिःप्रभुः ॥ ४२ ॥ स्वकर्मैवस्मरेद्विद्वान्सुखदुःखेथवागते ॥ यदितत्र हरिःकुर्यादनुग्रहयुतंमनः ॥ ४३ ॥ तदासुखंविवर्धेतदुःखंचक्षीणतांव्रजेत् ॥ नाभुक्तंक्षीयतेकर्मकल्प कोटिशतैरपि ॥ ४४ ॥ अवश्यमुपभोक्तव्यंकृतंकर्मशुभाशुभं ॥ सुखेवृद्धिःक्षयोदुःखेहरिभक्त्याभवेद्य तः ॥ ४५ ॥ लघूनांचापिपापानांक्षयःस्याद्धरिसेवनात् ॥ जलापायेतृणादीनांयथानाशोभवे द्ध्रुवं ॥ ४६ ॥ फलहानिर्यथावृक्षेगुरुपापेतथाभवेत्॥ सर्वपुण्यानिवर्धंतेयथावर्षासुवल्लयः ॥ ४७॥ यथा वृक्षाजलैस्तुष्टाःप्रसवंतिफलाधिकं ॥ तथाचहरिसेवायांसत्कर्माणिफलंतिहि ॥ ४८ ॥ तस्मादाप त्सुसंपत्सुश्वपाकोवाद्विजोथवा ॥ सेवेतसर्वदेवेशंसर्वदापुरुषोत्तमम् ॥ ४९ ॥ सर्ववेदैकवेद्योसौभगवा न्भूतभावनः ॥ लक्ष्मीर्यंसवतेनित्यंब्रह्माद्यायंभजंतिहि ॥ ५० ॥ प्रल्हादध्रुवमुख्यायंसेवित्वासिद्धि मापिरे ॥ तमेवशरणंयामिसमेनित्यसुखोहरिः ॥ ५१ ॥ कुत्रत्योयंपतिर्मर्त्यःकुत्रत्यावासपत्निका ॥ भ्रमंतिजीवाःसंसारेमायायंत्रमधिष्ठिताः ॥ ५२ ॥ प्रपायांविपणौवापितीर्थेदेवालयादिषु ॥ नानादेश्याः समायांतिकृतकार्याव्रजंतिच ॥ ५३ ॥ नकोपिकंचित्पश्येतगतंदृष्टेर्विदूरतः ॥ तद्वदेवात्रसंसारेमिलंतिन मिलंतिच ॥ ५४ ॥ सुकांतिरेवविदुषागालवेनसुशिक्षिता ॥ नाविंदतातुरंदुःखंविष्णुसेवापरायणा ॥ ॥ ५५॥ देहंत्यक्त्वातुलेभेसाश्वेतद्वीपाधिवासतां ॥ इतितारणतेस्माभिरुक्तंतत्कर्मपाकजं ॥ ५६ ॥ फलंचह रिसेवायाःकिमन्यच्छ्रोतुमिच्छसि ॥ ॥ तारणउवाच ॥ ॥ अयंहिपीड्यतेजंतुर्यमदूतैर्भयंकरैः

॥ ५७ ॥ अयोदंशैस्ताड्यमानोविड्भोजीकृमिसंकुले ॥ संतप्तवालुकायांचस्थापितोबद्धहस्तपात्

॥५८॥ किमनेनकृतंपापंकृपयावदताशुमां ॥ दूताऊचुः ॥ ॥ सुबाहुर्नामपांचालेबभूवक्षत्रियःपुरा

॥ ५९ ॥ सस्त्रीवशत्वमापन्नोविद्विष्टेपितरौस्वकौ ॥ स्वयंस्वादुसमश्नातिमातापित्रोर्ददातिनो ॥ ६०॥

तद्वाक्यमवजानातिउपहासंकरोतिच ॥ बुद्धिहानिर्भवत्येववृद्धत्वेदेहिनांस्फुटं ॥ ६१ ॥ अतएतौवि

मूढौमांयत्किंचिज्जल्पतःसदा ॥ इत्यादिदुष्टवाक्यानिश्रावयामासदुष्टधीः ॥ ६२ ॥ कदाचित्तंमहाते

जाभद्रशीलोद्विजोत्तमः ॥ समागत्याब्रवीद्वाक्यंलोकधर्मंचसंस्मरन् ॥ ६३ ॥ सुबाहोशृणुमेवाक्यं

येनस्यात्परमंहितं ॥ सर्वधर्मोत्तमोधर्मोगुरूणांपरितोषण ॥ ६४ ॥ उपनेतागुरुर्मुख्योद्विजानांपरिकी

र्तितः ॥ ततोदशगुणःप्रोक्तोजनकोतोदशाधिका ॥ ६५ ॥ माताप्रोक्ताचसर्वेषांततोयोज्ञानदोभवेत्

॥ मातुर्दशगुणःसस्यान्महामान्योभवेद्विसः ॥ ६६ यंनमोक्षोभवेत्पुंसस्तज्ज्ञानंसर्वतोवरं ॥ तद्दत्ता

तोभवेच्छ्रेष्ठोदेववद्वंद्यतांव्रजेत् ॥ ६७ ॥ ज्ञानस्ययस्यकस्यापिदातागुरुर्भवेद्ध्रुवं ॥ पितृवद्वंदनीयोसौना

वमन्येततंक्वचित् ॥ ६८ ॥ विद्याहिपरमंचक्षुःस्तद्दश्चक्षुप्रदःस्मृतः ॥ रूपवत्सान्निकृष्टंचतमसानोपह

न्यते ॥ ६९ ॥ तदेवचक्षुषापश्येन्नान्यथातुकथंचन ॥ ज्ञानंतुगुरुतोलब्धंनिखिलंसंप्रकाशयेत् ॥७०॥

अतोज्ञानंपरंचक्षुर्मुनिभिःसमुदीरितं ॥ मितंप्रत्यक्षतोवेत्तिमितंवेत्यनुमानतः ॥ ७१ ॥ सर्ववित्तुभवेच्छ

ब्दात्तस्माज्ज्ञानंपरंहिसः ॥ तत्प्रयोक्तागुरुर्मुख्यःसएवपरमःसुहृत् ॥ ७२ ॥ देहोपिपरमंपात्रंयत्रस्थोखि

लविद्भवेत् ॥ सदेहोजायतेमातृपितृभ्यामितिवैस्फुटं ॥७३॥ तस्मात्तौसर्वजातीनांवंदनीयौपरौस्मृतौ ॥
गर्भधारणपोषाभ्यांपितुर्मातापरोगुरुः ॥ ७४ ॥ मृतेपितरिजिवंतिशिशवोजोवमातृकाः ॥ मात्राहीनोन
जीवेतपितायद्यपिजीवति ॥ ७५ ॥ मात्रात्यक्तोपिजीवेतयदिमातापराभवेत् ॥ सैवतस्यभवेन्मातायात
त्पोषणमाचरेत् ॥ ७६ ॥ सातुमातृसमाज्ञेयानावमान्याहिकर्हिचित् ॥ सर्वकार्याधिकारीस्याद्भ्रातान्या
श्चोपदेशतः ॥ ७७ ॥ अतःसोपिगुरुःपुंसांद्विजानांपरमःस्मृतः ॥ आत्मनोधर्मभवेद्भार्यातत्पिताचगुरुः
स्मृतः ॥ ७८ ॥ तत्सुतोबंधुनातुल्योमात्रातुल्योहिमातुलः ॥ पितृव्यश्चापिपूज्योस्तिमातृष्वसापितृष्वसा
॥ ७९ ॥ श्वश्रूश्चमातृतुल्यास्यात्तथाज्येष्ठास्वसापिच ॥ तथामातुःसपत्नीचज्येष्ठोभ्राताापितुःसमः ॥
॥ ८० ॥ माननीयाःसर्वएतेयथायोग्यंतथाखिलाः ॥ कन्यावत्परिपाल्याहिस्नुषाभ्राताचपुत्रवत् ॥
८१ ॥ निवेदितात्माशिष्यश्चभ्रातृव्यश्चापिपुत्रवत् ॥ एवंहिगृहिणांधर्मःपूर्वेभ्योधिगतोमया ॥ ८२ ॥
सुबाहोत्वंपरोविद्वान्धर्माधर्माविवेचकः ॥ अथापिकुरुषेवज्ञांमातापित्रोःस्त्रियोवशः ॥ ८३ ॥ न्याये
नैवभवेत्पत्नीधर्मेचेद्विरुणद्धिनो ॥ धर्मप्रतीपकर्त्रीयाशिक्षणीयातुसाभवेत् ॥ ८४ ॥ श्वश्रूश्वशुरशुश्रू
षातस्यावर्मोमहान्स्मृतः ॥ श्वश्रूपिंडेनसंयोगंसैवार्हतिनचेतरा ॥ ८५ ॥ भर्तारमनुशिक्षेतत्यक्तधर्म
पथंसती ॥ धर्मपत्नीततःसास्याद्भोगपत्नीविपर्यये ॥ ८६ ॥ भोगपत्नींनधर्मेषुयोजयेद्धितकामुकः ॥
सुवस्त्रंचसुभोज्यंचमाल्यंदद्यान्नचेतरत् ॥८७॥ भोगपत्नीप्रसक्तोयोधर्मपत्नींविगर्हयन् ॥ सयातिनरकं

घोरंभोगपरन्यासमंपशुः ॥ ८८ ॥ धर्मपत्नीमृतुस्नातांनसेवेतपुमान्हियः ॥ सभ्रूणवधजंपापंस्त्रीवधा
ज्जातमप्युत ॥ ८९ ॥ आज्ञाभंगोनरेंद्राणांविप्राणांमानखंडनं ॥ पृथक्शय्याचनारीणामशस्त्रवधउ
च्यते ॥ ९० ॥ तस्माद्धर्मानुसंसक्तांपत्नीमनुरतोभवेत् ॥ विपरीतातुयाधर्मेतदुक्तंनचरेत्पुमान् ॥ ९१॥
अतोविवेकमाश्रित्यइहामुत्रसुखायच ॥ भार्याबुद्धिमनासक्तःपित्रोःसेवांसमाचरेत् ॥ ९२ ॥ एवंकृते
भवेत्कीर्तिस्तवलोकेस्थिराशुचिः ॥ परलोकेपितेभोगाभविष्यंतिसुरैःसमाः ॥ ९३ ॥ अन्यथात्वंसप
त्नीकोनरकेदुःखमाप्स्यसि ॥ अपकीर्तिश्चलोकेस्मिन्भविष्यतिचसुस्थिरा ॥ ९४ ॥ संभावितस्यचाकी
र्तिर्मरणादधिकास्मृता ॥ दूताऊचुः ॥ ॥ इतिब्रुवाणेवचनंभद्रशीलेमहात्मनि ॥ ९५ ॥ निलीना
शृण्वतीक्रुद्धासुभगासहसागता ॥ सुबाहोर्दयितापत्नीभद्रशीलंबभर्त्सह ॥ ९६ ॥ उत्तिष्ठोत्तिष्ठदुर्बुद्धे
केनानीतोसिशिक्षितुं ॥ धर्मंनत्वैविजानासिवृथापंडितमानवान् ॥ ९७ ॥ नहिपत्नीसमःकश्चित्सखा
लोकेपरत्रच ॥ तदाज्ञयैवकर्तव्यंगृहिणासुखमिच्छता ॥ ९८ ॥ उत्थायचेन्नयासित्वंहन्मित्वांमुसलेनवै ॥
इत्युक्त्वाक्रोधसंरक्तनेत्रामुसलमग्रहीत् ॥ ९९ ॥ तद्वशत्वेननोकिंचित्सुबाहुरवदद्वचः ॥ भद्रशीलोमहाभी
तोबहिर्यातोगृहात्ततः ॥ १०० ॥ तेनपापेनसुभागाश्वयोनित्वमुपागता ॥ सुबाहुश्चेद्दशंदुःखमनुभुंक्ते
सपापकृत् ॥ १ ॥ फलंहिकर्मणामेवंशृणुतारणनिश्चितं ॥ तारणउवाच ॥ पुण्यंकिमितिसंप्रोक्तंपापंच
किमितिस्मृतं ॥ २ ॥ किमर्थंसृष्टवान्देवस्तन्मेवदतपृच्छतः ॥ दूताऊचुः ॥ स्वरूपेणात्रिधाजीवाबद्धा

श्नानादिकर्मभिः ॥ ३ ॥ दातुंचित्रफलान्येभ्यःपुण्यपापेअचीक्लृपत् ॥ सत्वंरजस्तमइतिप्रकृतेःस्युर्गु
णास्त्रयः ॥ ४ ॥ तद्वद्वत्वेनजीवानांत्रिविधत्वंप्रकीर्तितम् ॥ कर्माण्यपितथात्रेधाफलंवापितथात्रिधा
॥ ५ ॥ पुण्यपापविचित्रत्वाद्विचित्रासृष्टिरिष्यते ॥ इच्छयासर्जनंविष्णोःप्रलयोमोक्षएवच ॥ ६ ॥
नतदिच्छांविनाकिंचित्सुखादिप्राप्यतेजनैः ॥ वैचित्र्यायततःसृष्टेःपुण्यपापेदधेहरिः ॥ ७ ॥ श्रुतिस्मृती
हरेराज्ञेयत्तुतत्रविधीयते ॥ स्नानसंध्यादिकंकिंचित्तस्मात्पुण्यंप्रजायते ॥ ८ ॥ यत्तुतत्रनिषिद्धंस्याद्धेनु
ब्रह्मवधादिकम् ॥ तदनुष्ठानतःपापंविहिताकरणात्तथा ॥ ९ ॥ दानंदयाहरेर्भक्तिर्धर्मोयंसर्वजाति
षु ॥ वेदाध्यायःस्वधास्वाहापंचयज्ञेषुनिष्ठता ॥ १० ॥ इत्यादीनितुकर्माणिद्विजातीनांचसर्वशः ॥
अन्यानिविस्तराज्ज्ञात्वाश्रुतिस्मृतिविचारतः ॥ ११ ॥ कुर्वीतस्वोचितंकर्मतच्चविष्णौसमर्पयेत् ॥
तदक्षयफलंप्रोक्तंपापंनैवसमाचरेत् ॥ १२ ॥ दैवादापतितेकार्यंप्रायश्चित्तंविधानतः ॥ तेननश्यंतिपा
पानिपश्चात्तापोभवेद्यदि ॥ १३ ॥ महापापंविनासर्वंकामतोवाप्यकामतः ॥ कृतंपापंविनश्येतपश्चा
त्तापादिनासखे ॥ १४ ॥ अकामेनमहापापंकृतंदैववशेनचेत् ॥ प्रायश्चित्तेनचीर्णेनतद्विनश्येन्नसंश
यः ॥ १५ ॥ कामतोयन्महापापंप्रायश्चित्तशतैरपि ॥ नविनश्यतिभोगेनक्षयस्तस्यप्रजायते ॥
॥ १६ ॥ प्रायश्चित्तेकृतेप्यस्यव्यवहार्योभवेन्नरः ॥ प्रायश्चित्तंकृतंनैवयस्यपापस्यकर्मणः ॥ १७ ॥
भोगेनैवक्षयस्तस्यब्रह्मज्ञानेनवाभवेत् ॥ भिद्यतेहृदयग्रंथिश्छिद्यंतेसर्वसंशयाः ॥ १८ ॥ क्षीयंतेचास्य

कर्माणितस्मिन्दृष्टेपरावरे ॥ इषिकातूलवत्पापंसकामंपुण्यमेवच ॥ १९ ॥ भस्मीभवंतिसपदि
दृष्टेब्रह्मणिशाश्वते ॥ पुरस्तात्क्रियतेयत्तुकर्मतेनननलिप्यते ॥ २० ॥ प्रारब्धंभुज्यतेचैवतदंतेमो
क्षमाप्नुयात् ॥ ततोनपुनरावृत्तिर्यत्रविष्णुःसनातनः ॥ २१ ॥ सर्वदापूज्यतेमुक्तैःसृष्टिसंहारवर्जि
तैः ॥ यदुन्मुखंभवेद्दातुंफलंकर्मतुसंचितम् ॥ २२ ॥ प्रारब्धंतत्तुविज्ञेयंभोगेनैवविनश्यति ॥
एवंविचित्रंसृष्टचर्थंपुण्यपापेहरिःस्वयं ॥ २३ ॥ अनादिकालतश्चक्रेस्वतंत्रोजगदीश्वरः ॥ मदाज्ञा
विहितंकर्मंकरोतिपुरुषोहियः ॥ २४ ॥ निषिद्धंनाचरेच्चापितस्मैदास्याम्यहंसुखं ॥ विहितानामकर्तायो
निषिद्धस्यविधायकः ॥ २५ ॥ तस्मैदुःखंप्रदास्यामिमिश्रेमिश्रफलंतथा ॥ अनादिरेषसंकल्पोहरेर्भ
वतिनान्यथा ॥ २६ ॥ एतदेवस्वतंत्रत्वंविष्णोरमिततेजसः ॥ नहिकोप्यन्यथाकर्तुंसंकल्पंतस्यशक्नुते
॥ २७ ॥ स्वतंत्रएकोभगवान्तदधीनायतोखिलाः ॥ आनंदोद्रेकतोविश्वंसृजत्यवतिहंत्यजः ॥ २८ ॥
दयालुत्वस्वभावत्वादपिसृष्टिंकरोत्ययं ॥ सृष्टिकालेहिजायंतेहरिभक्ताःपुनःपुनः ॥ २९ ॥ तत्तज्जन्म
निकुर्वंतिहरेराराधनंहितं ॥ मुक्तबंधास्ततोयांतितद्विष्णोःपरमंपदम् ॥ ३० ॥ आनंदंपरमंप्राप्ताःसृष्टिसंहा
रवर्जिताः ॥ पश्यंतिकृतकृत्यास्तेपरेषांसृष्टिसंसृती ॥ ३१ ॥ इष्टहानिर्नयत्रास्तिसंकल्पात्सर्वसिद्धयः
॥ मोदंतेस्वेच्छयातेहिवैकुंठादिदिधानसु ॥ ३२ ॥ इच्छयाभूमिमायांतिपातालंस्वर्गमेववा ॥ तेषां
प्रसादतोलोकांस्तान्पश्यत्वंयथाक्रमम् ॥ ३३ ॥ नहितेषामसूयास्तिईक्षस्वास्मान्सुखाधिकान् ॥ य

चातु०

॥७१॥

तोदोषानसंत्येषामसूयादितुदोषजं ॥ ३४ ॥ स्वस्वानंदेनसंपूर्णाःपरस्परहितैषिणः ॥ मोदंतेस्वेच्छया
तत्रहरिभक्तिरताःसदा ॥ ३५ ॥ जगत्सृष्ट्यादिकेतेषांइच्छानवप्रजायते ॥ ईश्वरेच्छानुकूलैवतेषामि
च्छासदाभवेत् ॥ ३६ ॥ सुखंततःसदातेषांइच्छाहानिर्हिदुःखकृत् ॥ एवंतारणतेसर्वं यद्यत्त्वंपृष्टवा
नसि ॥ ३७ ॥ तत्तेकथितमन्यच्चगमिष्यामोऽधुनावयं ॥ सर्पउवाच ॥ तथेतिप्रतिपन्नंतंतारणंनिन्यु
राशुते ॥ विष्णुदूताविष्णुलोकंसर्वेषामुपरिस्थितं ॥ ३३८ ॥ ॥ इतिश्रीवा०पु०चा०मा०पंच
विंशोध्यायः ॥ २५ ॥ ॥ सर्पउवाच ॥ संप्रवक्ष्यामिकपिलफलंदानेयथाभवेत् ॥ जीमूतनामावै
श्योभूत्पुरासौराष्ट्रदेशजः ॥ १ ॥ शतकोटिसुवर्णानामेकैकंकृतवान्गृहं ॥ एवंगृहशतंयस्यसंपूर्णं
हेमकुंभकैः ॥ २ ॥ ततःषष्टितमेवर्षेबुद्धिस्तस्याभवद्द्विज ॥ अहंदानंकरिष्यामिसर्वस्यास्यधनस्यहि ॥
॥ ३ ॥ दित्समानेतुजीमूतेनानादेशसमुद्भवाः ॥ आगमन्ब्राह्मणाविप्रबहुद्रव्यस्यकांक्षिणः ॥ ४ ॥
ततस्तानागतान्ज्ञात्वाजीमूतोधनदर्पितः ॥ नददातिस्मतेभ्यःसधनंशीघ्रंयथोचितं ॥ ५ ॥ वर्षंषण्मा
समथवात्रिमासंवात्रिपक्षकम् ॥ स्थित्वाशांतायविप्रायदूरादागत्यतिष्ठते ॥ ६ ॥ ददौक्लेशानुसारेणवित्तं
नादात्ततोधिकं ॥ एवंतस्यधनंसर्वंदीयमानंक्षयंगतं ॥ ७ ॥ ततोवर्षशतेपूर्णेनिन्युस्तंयमदूतकाः ॥ तं
दृष्ट्वाशुयमःप्राहगजयोनौपतत्वयम् ॥ ८ ॥ श्रुत्वैतत्प्राहजीमूतोमयादानंमहत्कृतं ॥ तत्फलंनैवप
श्यामिगजयोनिःकुतोमम ॥ ९ ॥ यमउवाच ॥ यत्कृतंहित्वयादानंसेवयैवनचान्यथा ॥ तेषांकष्टानु

मा०अ०

२६

॥७१॥

सारेणनाधिकंदत्तवानसि ॥ १० ॥ कथंतस्यफलंतेस्यात्समायव्ययमेवतत् ॥ उप्तंत्वयादानबीजंतच्छु
ल्कंविप्रसेवया ॥ ११ ॥ उप्तेनतत्फलंनैवतवकिंचिद्भविष्यति ॥ दीयमानेत्वयादानेविष्णुशर्माद्विजो
त्तमः ॥ १२ ॥ कृष्णातीरसमावासोविष्णुसेवापरायणः ॥ सत्वामागतवान्द्रव्यलिप्सयातावदेवहि ॥
१३ ॥ त्वदायुःपूर्णतांयातंतद्दृणंत्वयिवर्तते ॥ तन्निवृत्त्यर्थमेवंत्वंगजयोनिंभजस्वभोः ॥ १४ ॥ इत
स्तुदशमेवर्षेविष्णुशर्मामरिष्यति ॥ ततःक्षत्रियवंशेषुरम्येमाहिष्मतीपुरे ॥ १५ ॥ हैहयानांकुलेराजाप्र
तापःसभविष्यति ॥ तस्यद्वारिगजोभूत्वारणेत्यक्त्वाकलेवरं १६ अनृणत्वमवाप्याथपुनर्वैश्योभविष्यसि॥
तस्यतद्वचनंश्रुत्वातूष्णींभूतेथदूतकाः ॥ १७ ॥ विंध्याचलेमहारण्येगजयोनौतमाक्षिपन् ॥ एवंदानफ
लंतुभ्यमुक्तंकपिलर्तेतिके ॥ १८ ॥ इदानींतेप्रवक्ष्यामियथाभागफलंलभेत् ॥ आसीत्पुरानृपोवी
रबाहुरुत्कलभूमिषु ॥ १९ ॥ तस्यमंत्रीसुमंत्रोभूद्धर्मेणापालयद्भुवम् ॥ निम्नभूमौक्वाचित्तस्य
राज्येवर्षासुलावकः ॥ २० ॥ व्यलुंठत्तत्रपानीयंकिंचित्तस्थौततःपरम् ॥ वाराहस्तत्रचागत्यजलंदृष्ट्वा
व्यलोडयत् ॥ २१ तत्राभून्निम्नमधिकंजलंपंकिलमासच ॥ तत्रागान्महिषीकाचित्सापितत्रव्यलोडय
त् ॥ २२ ॥ तत्राभूत्पल्वलंभूमौपयोभूदाधिकंततः ॥ ततआगत्यमातंगस्तत्रलोडनमाचरत्॥ २३ ॥बहुन
त्रस्थितंतोयंवृष्टेदेवेपुनःपुनः ॥ वीरबाहुःसुमंत्रीचदैवात्तत्रोपजग्मतुः ॥ २४ ॥ तत्पल्वलवरंदृष्ट्वातोयेन
परिपूरितम् ॥ परितोजलमार्गंचसुमंत्रःप्राहतंनृपम् ॥ २५ ॥ तडागोत्रभवेत्सम्यक्खन्येतात्रक्षितौय

दि ॥ जलंबहुतरंचात्रभविष्यतिनराधिप ॥ २६ ॥ तृप्तिंयास्यंतिबहवःपुण्यंतेनभविष्यति ॥ तथेति
राजातंप्राहसुमंत्रोथादिशत्तदा ॥ २७ ॥ खननेनतडागस्यतन्महच्चाभवत्सरः ॥ तत्रासुर्विमलाआपः
पद्मानिकुमुदानिच ॥ २८ ॥ तीर्थयात्रापराःपांथायेचान्येमार्गगामिनः ॥ पशवःक्रमिकीटाद्यास्तत्रा
सुर्मुदिताःसदा ॥ २९ ॥ पुण्येतत्रविवादोभूत्किंयत्कस्यभवेदिति ॥ लिखितंचित्रगुप्तेनपृष्टोभूद्यमरा
ट्स्वयम् ॥ ३० ॥ यमःप्राहविचार्यैताच्चित्रगुप्तायधीमते ॥ लावकश्चवराहश्चमहिषोकुंजरस्तथा ॥
॥ ३१ ॥ उपदेष्टाचकर्ताचषडेतेसमभागिनः ॥ तदाज्ञयालिलेखाथचित्रगुप्तःकृतीतदा ॥ ३२ ॥
षट्सुपुण्यंसमंविप्रएतत्सत्यंवदामिते ॥ अतःशक्तमशक्तोवाकर्तुंचापिहियोनरः ॥ ३३ ॥ प्रेरयेद्धर्मकार्ये
षुपापकार्यान्निवर्तयेत् ॥ इतितेसर्वमाख्यातंयन्मांत्वंपरिपृष्टवान् ॥ ३४ ॥ कपिलउवाच ॥ धन्योहं
कृतकृत्योहंलब्धवांश्चक्षुरद्यते ॥ निर्गतंमोहकलिलमुदितोज्ञानभास्करः ॥ ३५ ॥ तदाज्ञयाकरोम्येवचा
तुर्मास्यव्रतंपरम् ॥ सर्पउवाच ॥ याहित्वंद्विजगच्छामिस्वस्थानंपुण्यमाचर ॥ ३६ ॥ श्रीवराहउवा
च ॥ इत्युक्त्वाकपिलंसर्पःप्राविशद्बिलमात्मनः ॥ कपिलस्तुततश्चक्रेचातुर्मास्येमहाव्रतम् ॥ ३७ ॥
अन्यच्चकथितंयद्यत्सर्पेणामितबुद्धिना ॥ तथातथासविदधेश्रुतिस्मृत्यनुसारतः ॥ ३८ ॥ सम्यग्विचा
र्यधर्मांश्चविद्वद्भ्यश्चाप्यधर्मकान् ॥ धर्मानेवचचारासौअधर्ममनसात्यजत् ॥ ३९ ॥ ततःस्वल्पेनकाले
नशंबूकोमृतिमाप्तवान् ॥ तत्पत्नीचापितेनागादथासौयमसंनिधिं ॥ ४० ॥ दूतैःसभार्यकोनीतःसो

ब्रवीदेनमाशुवै ॥ कपिलस्यशरीरांतःप्रवेशयत दूतकाः ॥ ४१ ॥ ततःक्षिप्रंजलैःसाकंतेदूताःसमपात
यन् ॥ मासत्रयंशरीरस्यततोसौनिर्गतोबहिः ॥ ४२ रेतोद्वारातस्यपत्न्यामृतुकालेसमाविशत् ॥ सुशी
लागर्भिणीचासीत्पत्युरानंददासदा ॥ ४३ ॥ अतीतेनवमेमासेपुत्रंप्रासूतसासती ॥ जातकर्मादिसं
स्कारान्पिताचक्रेमुदान्वितः ॥ ४४ ॥ वर्षेतुपंचमेतस्यव्रतंप्रादात्पिताततः ॥ वेदाध्ययनशीलोभूत्सर्व
विद्याविशारदः ॥ ४५ ॥ ततोविंशतिमेवर्षेविवाहंकृतवान्पिता ॥ देवशर्मेतिनामासील्लोकेप्रख्याततांग
तः ॥ ४६ ॥ पुत्रंयौवनमापन्नंगृहस्थाश्रमवर्तिनम् ॥ सुशीलासहितःप्राहसमाहूयरहस्थितः ॥ ४७ ॥
धनमत्रास्तिबहुतेपश्यपित्रासुसंचितं ॥ त्वंतद्गृहाणसुमतेयथेच्छसितथाकुरु ॥ ४८ ॥ इत्युक्त्वातद्धना
गारंनीत्वाप्रीत्यास्वकंसुतम् ॥ उद्घाटचदर्शयामासद्वारंहेमगृहेस्यतत् ॥ ४९ ॥ ततःससर्पआगत्यदेवशर्मा
णमब्रवीत् ॥ इत्येतत्कालपर्यंतंत्वद्धनंरक्षितंमया ॥ ५० ॥ तवपित्रार्जितंविप्रधनदस्याज्ञयाद्यतत् ॥
तुभ्यंप्रदायगच्छामिस्वस्तितेस्तुदिवंप्रति ॥ ५१ ॥ इत्युक्त्वावचनंतस्मैसर्पदेहंविहायतम् ॥ यक्षोदि
व्यवपुर्भूत्वागतवान्धनदालयं ॥ ५२ ॥ देवशर्मापितद्द्रव्यंपित्राक्लेशेनसंचितं ॥ विप्रेभ्यादातुमैच्छ
त्तच्छनैर्येनव्ययोभवेत् ॥ ५३ ॥ मार्गशीर्षादिमासेषुनामभिःकेशवादिभिः ॥ हरिंसंपूज्यविधिवच्चक्रे
ब्राह्मणतर्पणम् ॥ ५४ ॥ यथाविवस्वानेकोपितत्तत्संक्रांतियोगतः ॥ तत्तनाम्नापूज्यमानोददाती
ष्टंफलंनृणां ॥ ५५ ॥ एवमेवाहमेकोपिकेशवादिषुनामभिः ॥ आराध्यमानोयच्छामिदानयज्ञादिजं

फलम् ॥ ५६ ॥ माघंमाधवनामाहंवैशाखेमधुसूदनः ॥ श्रावणादिचतुर्ष्वेवषतस्तः श्रीधरादिकाः ॥
॥ ५७ ॥ देवतास्तुविशेषेणपूजनीयाःप्रयत्नतः ॥ एवंसुषट्सुमासेषुविशेषाद्धनवान्भवेत् ॥ ५८ ॥
यत्किंचित्क्रियतेपुण्यंदानमध्ययनंतपः ॥ तदक्षयफलंप्रोक्तमितिज्ञात्वाचकारसः ॥ ५९ ॥ तस्यपत्नी
चसैवाभूत्पूर्वजन्मनियास्थिता ॥ गौरीनाम्नानुतस्यास्तुपंचपुत्राःप्रजज्ञिरे ॥ ६० ॥ मातापित्रोश्चशु
श्रूषासभार्योविदधेसदा ॥ तयोःसंतोषणंयेनतेनदेवाश्चपूजिताः ॥ ६१ ॥ कपिलश्चसुशीलाचयदा
जरठतांगतौ ॥ तदोद्योगंचकारासौगंतुंवाराणसींप्रति ॥ ६२ ॥ शिष्टंधनंसमादायगत्वावाराणसींत
तः ॥ यात्राविधिंविधायैववासंतत्रचकारह ॥ ६३ ॥ मृत्युकालेतयोःपित्रोर्भूरिदानंचकारसः ॥ चक्रेने
तादिकंतत्रविधिवच्चौर्ध्वदेहिकम् ॥ ६४ ॥ गयायांपिंडदानंनिकृत्वाकाश्यांस्थिरोभवत् ॥ दत्वासर्वं
चविप्रेभ्योयथालाभेनजीवता ॥ ६५ ॥ आयुःसफलतांचक्रेदानाध्ययनकर्मभिः ॥ अंतेसवैष्णवंलो
कंप्रतिपेदेसभार्यकः ॥ ६६ ॥ इत्थंदेवितवाख्यातंचातुर्मास्यविधानकम् ॥ फलंचतस्याविविधानाना
धर्मास्तथैवच ॥ ६७ ॥ श्रुत्वैतद्देविविधिवद्यःकरोतिव्रतंत्विदं ॥ सधन्यःसुकृतार्थश्चसफलंतस्यजी
वितम् ॥ ६८ ॥ नह्यनेनसमंकिंचिन्मत्प्रियंव्रतमुत्तमं ॥ तवप्रीत्येदमाख्यातंरहस्यंपरमंमया ॥ ६९ ॥
सूतउवाच ॥ इत्थंसाक्रोडरूपेणहरिणाप्रतिबोधिता ॥ परांमुदमवाप्याथप्रणनामधराहरिं ॥ ७० ॥
आख्यानंयइदंदिव्यंशृणुयाद्भक्तिमान्नरः ॥ संपूर्णफलमाप्नोतिचातुर्मास्यव्रतस्यसः ॥ ७१ ॥ अपुत्रः

पुत्रमाप्नोतिधनमाप्नोतिनिर्धनः ॥ नारीसौभाग्यमाप्नोतिपतिंपूर्णायुषंतथा ॥ ७२ ॥ महापातकराशी नांनाशोभवतितत्क्षणात् ॥ कृत्वैतद्धरिदैवत्यंचातुर्मास्यव्रतंशुभं ॥ ७३ ॥ धर्मार्थीचाप्नुयाद्धर्ममर्थार्थी चार्थमाप्नुयात् ॥ कामानवाप्नुयात्कामीप्रजार्थीचाप्नुयात्प्रजाः ॥ ७४ ॥ श्रोतव्यंसर्वदाह्येतत्सर्वधर्मवि निर्णयम् ॥ हरिणापरयाप्रीत्याधरायैप्रोक्तमंजसा ॥ ७५ ॥ परंज्ञानप्रदंह्येतन्मोक्षसोपानमद्भुतं ॥ ह रिभक्तिकरंनित्यंसर्वदैवशुभावहं ॥ ७६ ॥ सदैवचिंतनीयंहिसंसारान्मुक्तिमिच्छुभिः ॥ नानेनसदृशं किंचिद्विष्णुप्रीतिकरंमहत् ॥ ७७ ॥ ॥ इतिश्रीवारा०पु०चा०मा०मा०षड्विंशोऽध्यायः ॥ २६ ॥

सूतउवाच ॥ वसासृङ्मांसमेदोस्थिमज्जाशुक्रैर्विनिर्मिते ॥ विण्मूत्रकफपूर्णेस्मिन्देहेहंभावमास्थितः ॥ ॥ १ ॥ सच्चिदानंदरूपंतत्स्वरूपंविस्मृतंस्वकं ॥ देहेहंभावमापन्नोराजाहंलोकविश्रुतः ॥ २ ॥ इत्यस्मिन्मनुतेजंतुरंतेविट्भस्मसंज्ञिते ॥ ममत्वंप्राप्तवांश्चापिदेहसंबंधिवस्तुषु ॥ ३ ॥ ना नारूपविलासाढ्यांनारींदृष्ट्वाप्रहृष्यति ॥ तुरगान्वायुवेगांश्चगजान्मेघस्वनानपि ॥ ४ ॥ वर्त मानानुकूल्येनसुहृदोधनलिप्सया ॥ प्रहृष्यतिमुहुर्दृष्ट्वास्तावकेभ्यःशृणोतिच ॥ ५ ॥ म न्यतेध्रुवमात्मानंश्लाघतेचपुनःपुनः ॥ अहोपश्यतमेवाहंसुवृत्तंचंदनोक्षितं ॥ ६ ॥ विजेष्येपृथिवींस र्वांभोगान्भोक्ष्येयथेप्सितान् ॥ पुनर्नारींपुनर्वित्तंपुनरश्वान्पुनर्गजान् ॥ ७ ॥ अर्जिष्यामिरथान्दिव्या न्धनानिविविधानिच ॥ अस्मिन्शत्रौहतेपश्चान्ममराज्यमकंटकम् ॥ ८ ॥ भविष्यतिततःशीघ्रंहनिष्या

मिचतंरिपुं ॥ इतिध्यायन्नहरहर्नजानातिस्वकंहितं ॥ ९ ॥ रिपोर्मृतिंदूतमुखाच्छ्रुत्वाहृष्यतिमंदधीः ॥ मन्यमानोहिसततमात्मानमजरामरं ॥ १० ॥ स्वपितुर्मरणंनित्यंवांछत्येषविमोहितः ॥ अस्मिन्मृतेराज्यमहंभोक्ष्यामीत्याशयायुतः ॥ ११ ॥ नजानातिविमूढात्मामममाप्येवंभविष्यति ॥ पितुरग्रेमृतियाति प्रायेणैषसुपापधीः ॥ १२ ॥ कथंचिद्यदिजीवेतनपुत्रात्सुखमाप्नुयात् ॥ सदाविषयचिंतायांमग्नोनैवमृतिंस्मरेत् ॥ १३ ॥ अहोएतन्महाश्चर्यंमहामोहस्यजृंभितं ॥ यन्मृतंपितरंदग्ध्वापुत्रोजीवितुमिच्छति ॥ १४ घ्नंतिस्वपितरंकेचिद्राज्यलोभेनमोहिताः ॥ किमुभ्रातॄन्पितृव्यादीन्जानंतःस्वंनिरामयं १५ इयंभूमिर्मदीयेतिविवदंतःपरस्परं ॥ परस्परंचनिघ्नंतोपि मूढाज्ञानवर्जिताः ॥ १६ ॥ तान्दृष्ट्वापशुवन्मूढानंतर्हसतिमेदिनी ॥ बहवोमांमन्यमानाःस्वकीयामितिनिश्चिताः ॥ १७ ॥ ग्रस्ताःक्षणेनतेसर्वेनैषांनामापिशिष्यते ॥ तांमामतीवहृष्टत्वान्मदीयामितिचक्षते ॥ १८ ॥ धननिक्षेपणायासौमूढःखनतिगर्तकं ॥ सददातिधनंमह्यंस्वयंकर्षतिमृत्तिकां ॥ १९ ॥ स्वदेहमपिविक्रीयधनंक्लेशाद्यदर्जितं ॥ अहोनभुंक्तेमूढोयंनिधत्तेमयितद्वृथा ॥ २० ॥ इतिपृथ्वीहसत्येषादृष्ट्वामूढस्यचेष्टितं ॥ नटेभ्योगायकेभ्यश्चशैलूषेभ्यश्चभूरिशः ॥ २१ ॥ नर्तकीभ्यश्चबंदिभ्यःकेचिद्ददतियद्धनं ॥ यच्चापिभूरिशोभुंक्तेमातंगतुरगादिभिः ॥ २२ पश्चात्तापोनतत्रास्तिन्ययोयुक्तोयमित्यपि ॥ जानंतिस्वीयहृदयेश्लाघंतेचमुहुर्मुहुः २३ ॥ अध्रुवेषुपदार्थेषुध्रुवबुद्धिर्विमूढधीः ॥ ध्रुवाणितेनत्यक्तानित्यज्यतेह्यध्रुवैश्वसः ॥ २४ ॥ पुत्र

दारधनादीन्यानुद्दिश्यात्रैवसंसृतौ ॥ बहुधायततेमूढस्तेतंजहातिवैध्रुवं ॥ २५ ॥ बहुनात्रकिमुक्तेनस्वदे
होपिनॄणामयं ॥ स्वादुभोगान्समश्नातिस्वेच्छयानैवतिष्ठति ॥ २६ ॥ पूर्णेतुसमयेस्वस्यक्षणमात्रंनति
ष्ठति ॥ शठमित्रमिमंतस्मान्मतिमान्नातिविश्वसेत् ॥ २७ ॥ यावदस्मिन्निंद्रियाणिपाटवंदक्षतातथा ॥
तावदेवामुतोदेहाद्धीमतापुण्यमर्ज्यतां ॥ २८ ॥ यथासम्यक्वाहनीयोभाटकीबलिवर्दकः ॥ तथादेहा
त्साधनीयंयेनस्वस्यहितंभवेत् ॥ २९ ॥ नसाधयतिचेत्पुण्यंदेहेनानेनमानवः ॥ पश्चात्तापोभवेत्तस्य
यस्यनास्तिप्रतिक्रिया ॥ ३० दिवातत्कर्मकुर्वीतयेनरात्रौसुखंस्वपेत् ॥ मासेष्वष्टासुतत्कुर्याद्येनवर्षाःसु
खंवसेत् ॥ ३१ तदेवकर्मकुर्वीतपश्चात्तापोनयद्भवेत् ॥ तदेवजीवताकार्यंमृतोयनसुखंलभेत् ॥ ३२
बिभेतिदस्युतोमर्त्योनृपाद्व्याघ्राद्बिभेतिच ॥ अहोमोहस्यमाहात्म्यंकृतांतान्नबिभेतिच ॥ ३३ ॥ मंड
लाधिपतेःकृत्वास्वल्पमप्यपराधनं ॥ भीत्यारात्रौनानिद्रातिशय्यायामपिविह्वलः ॥ ३४ ॥ अहोमहा
कृतंलोकेऽनंतब्रह्मांडसत्पतेः ॥ कृत्वापराधबहुलंसुखंस्वपितियान्निशि ॥ ३५ ॥ श्रुतिस्मृतिहरेराज्ञेय
स्तेउल्लंघ्यवर्तते ॥ कोपराधीभवेल्लोकेअस्माद्दुष्टारसुदुर्मतेः ॥ ३६ ॥ कृपयायेनदेहेस्मिन्निर्मितंचक्षुरिंद्रियं ॥
सज्जनानांनिरीक्षार्थंप्रतिमानांहरेस्तथा ॥ ३७ ॥ गंगादिपुण्यतीर्थानांभक्त्यासंदर्शनायच ॥ ईदृशंपुण्य
दंचक्षुःप्राप्यमूढोविलज्जकः ॥ ३८ ॥ परद्रव्येषुनारीषुलोभदृष्टिंकरोत्ययं ॥ यद्यप्येतदसाध्यंस्यान्मनसा
पापमाचरेत् ॥ ३९ ॥ ईदृशींमृगशावाक्षींकदालिंगामिचुंबनं ॥ कदास्वस्याभवेन्मह्यंवृथाकांक्षतिदु

मंतिः ॥ ४० ॥ एवंपरधनंदृष्ट्वासानुरागेणचेतसा ॥ सदाध्यायतिदुश्चेताइदंमेभवतादिति ॥
॥ ४१ ॥ मुक्ताहारोविचित्रोयंवक्षस्यस्तुममाश्रियः ॥ नानाविधाह्यलंकाराइमेसंतुगृहेमम ॥ ४२ ॥
इतिध्यायतिदुष्टात्मानचप्राप्नोतितद्यथा ॥ तदाचौर्यैमतिंधत्तेततोभ्रमतिलोभतः ॥ ४३ ॥ चिं
तनादेवजायंतेमहापातकराशयः ॥ किमुरयात्तादृशाचारान्महापातकसंचयः ॥ ४४ ॥ इ
हलोकेपरत्रापिततोयंनिंद्यतांव्रजेत् ॥ एवमेवतुसर्वाणिश्रोत्रादीनींद्रियाणि च ॥ ४५ ॥ सत्क
थाश्रवणाद्यर्थंहरिरस्मैप्रदत्तवान् ॥ तस्योपकारंनोजानन्नूतैरेवायंशुभेंद्रियैः ॥ ४६ ॥ नानावि
धानिपापानिकरोत्येवंदिनेदिने ॥ चौर्यंकरोतिहस्ताभ्यांपरस्त्रीस्पर्शमेवच ॥ ४७ ॥ करोतिच
वृथाक्रीडांताभ्यांनहरिमर्चति ॥ आशापाशशतैर्बद्धःसर्वदाधनिनांगृहे ॥ ४८ ॥ भोगार्थंक्रीडयावा
पिपद्भ्यामटतिदुर्मतिः ॥ तीर्थयात्रांनचैवासौताभ्यांकर्तुसमीहते ॥ ४९ ॥ धनिनांप्रीतिकामोयंद्वारेति
ष्ठतिमंदधीः ॥ याममात्रंद्वियामंवाक्षुत्पिपासाप्रपीडितः ॥ ५० ॥ नचद्वारिहरेःक्वापिक्षणंतिष्ठतिकाम
तः ॥ कथंचिद्यदिनिष्ठेततर्हिश्रांतोभवत्यहो ॥ ५१ ॥ तदैवोपविशत्याशुकश्चिद्द्वर्वादुपाविशेत् ॥
कश्चिद्द्रव्यमदोन्मत्तःकश्चिद्विद्यामदोद्धतः ॥ ५२ ॥ नयातिदेवसदनंमहामोहविनाशदृक् ॥ पुण्यने
वपरंलोकेयेनसर्वाश्चसिद्धयः ॥ ५३ ॥ जायंतेहिनृणांनित्यंक्लिश्यंतेयेनवर्जिताः ॥ धनीपुण्येनजायेत
पुत्रीपुण्येनजायते ॥ ५४ ॥ सुस्त्रीकश्च सुरूपश्चनीरोगश्चापिभूमिपः ॥ स्वर्गलोकेनिवासश्चपुण्येनैके

नलभ्यते ॥ ५५ ॥ देवत्वंचापिमुक्तत्वंयत्रान्यत्स्वसमीहितं ॥ पुण्येनैवतुसर्वत्रलभंतेजंतवःसदा ॥
॥ ५६ ॥ तत्पुण्यंजायतेद्वाभ्यांदानेनतपसातदा ॥ न्यायेनोपार्जितंद्रव्यंसत्पात्रेप्रतिपादितं ॥ ५७ ॥
देशकालानुसारेणतद्दानंफलदंचतत् ॥ आपत्कालेतुसंप्राप्तेन्यायद्रव्यंलभेन्नचेत् ॥ ५८ ॥ परवृत्त्याश्र
येणापिधनमर्जन्नदुष्यति ॥ येनहिंसानजायेतसाधूनांनापिकोपनं ॥ ५९ ॥ दुष्टानांदमनंयेनसतांत्राणतो
षणंभवेत् ॥ तादृश्यापरयावृत्याधनमर्जन्नदुष्यति ॥ ६० ॥ यदितेनधनेनासौनकुर्याद्देवतोषणं ॥ त
दैवपापभागीस्यादन्यथानैवदोषभाक् ॥ ६१ ॥ चतुर्युगात्मकेकालेपर्यायाज्जायतेकलिः ॥ तस्मिन्
घोरेयुगेविप्राब्राह्मणानांविपद्भवेत् ॥ ६२ ॥ देवब्राह्मणहंतारोराजानोदस्यवस्तथा ॥ नक्षत्रियाश्चनोवै
श्यानशूद्रावापिभूमिपाः ॥ ६३ ॥ किराताःशबराम्लेच्छाबर्बराःक्रूरवृत्तयः ॥ यदानृपास्तदाकस्यं
विप्राणांन्यायतोधनं ॥ ६४ ॥ जीवनंदुर्लभंयत्रधनंतत्रलभेत्कथं ॥ अतोमहाविपत्तिःस्यात्तदानींसर्व
थासतां ॥ ६५ ॥ तस्यामापदिजीवेतपरवृत्त्यापिबुद्धिमान् ॥ प्रायश्चित्तार्थंकुर्वीतदेवब्राह्मणतोषणं ॥ ६६ ॥
यत्रहिंसापराःक्रूराःसज्जनत्रासहेतवः ॥ दुराचाराःकर्मनष्टादानधर्मविवर्जिताः ॥ ६७ ॥ तएवपापिनोलोके
पच्यंतेनरकेचिरं ॥ स्वस्ववर्णाश्रमार्हंयत्कर्मतत्तपउच्यते ॥ ६८ ॥ भोगत्यागोहरौभक्तिरित्येतत्त्रिविधंतपः ॥
कथायाःश्रवणंविष्णोस्तच्छास्त्राध्ययनंतथा ॥ ६९ ॥ स्मरणंतच्चरित्राणांतद्रूपध्यानमेवच ॥ तन्मूर्ति
परिचर्याचतत्पादप्रणतिस्तथा ॥ ७० ॥ तस्यवातस्यभक्तानांयेनप्रीतिर्विवर्धते ॥ तादृशाचरणंकुर्यात्सर्वस्वस्य

निवेदनं ॥ ७१ ॥ स्वदेहात्पुत्रदारादेर्यःस्नेहःसर्वतोवरः ॥ तथासर्वेश्वरत्वंचहरौजानीतनिश्चितं ७२
सर्वेषांतपसांश्रेष्ठा भक्तिरेषाहरेःस्मृता ॥ एतयायोविहीनःस्यात्तस्यपुण्यंवृथाभवेत् ॥ ७३ ॥ हरिनिंदा
परंपापंसर्वेषांश्रेष्ठमुच्यते ॥ यस्यनास्तिप्रतीकारःप्रायश्चित्तशतैरपि ॥ ७४ ॥ पुण्यंदानंतपोभ्यासाद्य
थाभक्तिमतांहरो ॥ तथा चौर्येणपापंस्यान्निषिद्धाचरणादपि ॥ ७५ ॥ शरणागतिरस्यैवतत्प्रायश्चित्तमु
च्यते ॥ एवंलोकस्थितिंज्ञात्वापुण्यपापेशुभाशुभे ॥ ७६ ॥ बंधमोक्षंसुखंदुःखंकुर्याद्भक्तिंहरौसदा ॥ त
त्प्रीतयेधनत्यागोब्राह्मणेषुचशक्तितः ॥ ७७ ॥ कुर्वीतात्महितार्थायचातुर्मास्येविशेषतः ॥ सर्वेभ्यःपुण्य
कालेभ्यश्चातुर्मास्यंवरंस्मृतं ॥ ७८ ॥ अतस्तस्मिन्कृतंयद्यत्पुण्यंवापापमेववा ॥ भवेद्बहुगुणंविप्रास्त
स्मात्पुण्यंसमाचरेत् ॥ ७९ ॥ केचिन्मूकाःकेचिदंधाःपंगवःकुणपाःपरे ॥ गर्हिताश्चदरिद्राश्चस्वभावा
त्पापिनोपरे ॥ ८० ॥ नहितेधिकृताःपुण्येकेचिद्रोगातुराअपि ॥ नतेषांपरलोकस्यस्वप्रेप्याशादुरात्म
नां ॥ ८१ ॥ अतोयेषामिंद्रियाणिहस्तौपादौतथैववाक् ॥ स्वस्वव्यापारदक्षाणियावत्तावद्धितंचरेत्
॥ ८२ ॥ यथापर्णानिवृक्षस्यगलितानिततःपरं ॥ वृक्षसंगंनाप्नुवंतितथादेहेंद्रियाणिच ॥ ८३ ॥
बाल्यंवायौवनंवापिवार्धकंवाच्युतंभवेत् ॥ नेक्ष्यतेतत्परावृत्त्यायेगतास्तेतथाक्षणाः ॥ ८४ ॥ मेरु
तुल्यसुवर्णेनदत्तेनायंनलभ्यते ॥ आयुषोयःक्षणोनीतस्तद्व्यर्थत्वेपराक्षितिः ॥ ८५ ॥ पुण्यार्जनेनैव
भवेत्सार्थक्यमायुषोनृणां ॥ तदभावेभवेद्व्यर्थंतस्मात्पुण्योद्यतःसदा ॥ ८६ ॥ षष्टिनाडयात्मके

दुःखंवज्रघातात्सुदुःसहं ॥ अनुभूयापितद्दुःखंयज्जीवतितदद्भुतं ॥ ४९ ॥ चित्रंयन्म्रियमाणोपिचिं
तांवितनुतेनरः ॥ मृतेमयिकथंहाहाजीवेरन्मेसुतादयः ॥ ५० ॥ एवंयोपित्सुतादीनांनपुनर्दर्शनंभवे
त् ॥ तेषांमनःसमाधत्तेरोदित्यपिमुहुर्मुहुः ॥ ५१ ॥ गतंनैवेक्ष्यतेभूयोदृश्यमानंचनश्यति ॥ अत्या
श्चर्यमिदंराजन्विश्वासस्तत्रयन्नृणाम् ॥ ५२ ॥ सुहृदंसर्वलोकानांसृष्टिसंहारकारकम् ॥ सर्वदासंगति
र्यस्ययःसखाजन्मजन्मनि ॥ ५३ ॥ तंविस्मरतिमूढोयंकथंसुखमवाप्नुयात् ॥ एकएवोत्पद्यतेयंम्रिय
तेचैकएवहि ॥ ५४ ॥ एकएवसुखंभुंक्तेएकएवतुदुष्कृतं ॥ येषामर्थेनिशंजंतुर्मग्नश्चिंतापयोनिधौ ॥
॥ ५५ ॥ तैरेवोपेक्ष्यतेवृद्धोमृतश्चैवविशेषतः ॥ तस्मात्सखायंसर्वेषांसर्वकर्मसुसाक्षिकः ॥ ५६ ॥
जीवनेमरणेस्वर्गेमुकौयेनैवसंगतिः ॥ सएवसर्वदाध्येयोनचाविस्मर्तुमर्हति ॥ ५७ ॥ श्रवणंतस्यकर्त
व्यंतद्भक्तानांचसंगतिः ॥ सर्वदैवविधातव्यातेनैवास्यहितंभवेत् ॥ ५८ ॥ आयुषःक्षणएकोपिस्वर्ण
भारैर्नलभ्यते ॥ सचेद्व्यर्थत्वमायातिकाहानिःस्यात्ततःपरं ॥ ५९ ॥ स्वर्णस्यरेणुरेकोपिच्युतश्चेत्तस्य
मार्गणम् ॥ अत्यायासेनकुरुतेनजानात्यायुषःक्षयं ॥ ६० ॥ यथादंडेनमहतामस्तकेताडितोनरः ॥
मूर्छितोपिनजानातिदुःखंतद्घातसंभवं ॥ ६१ ॥ स्वल्पंदुःखंविजानातितदानीमेवमानवः ॥ मन्ये
तथैवलोकोयंमहाघातनमोहितः ॥ ६२ ॥ अतएवनजानातिव्यर्थमायुर्गतंनिजं ॥ स्वल्पहानिंवि जा
नातिस्वर्णरेणुंहिमार्गति ॥ ६३ ॥ दानेनहरिभक्त्याचभवेत्सार्थक्यमायुषः ॥ तदभावेभवेद्व्यर्थमतस्त

त्सर्वदाचरेत् ॥ ६४ ॥ भक्त्यातन्नामगृण्हीयाच्छृणुयात्तत्कथांसदा ॥ संगात्तद्भक्तलोकस्यतस्यभक्ति
र्विवर्धते ॥ ६५ ॥ प्रवृद्धासाददात्येवसर्वथामोक्षजंसुखं ॥ कालजंनभयंयत्रतद्भवत्येवनान्यथा ॥
॥ ६६ ॥ सर्वेष्वपिचधर्मेषुवरिष्ठाहरिसंस्मृतिः ॥ सर्वेष्वपिचपापेषुवरिष्ठातस्यविस्मृतिः ॥ ६७ ॥
इत्येवंनिश्चयंमत्वास्वस्ववर्णेहितंचयत् ॥ स्वस्वाश्रमोचितंकर्मकृत्वाविष्णौसमर्पयेत् ॥ ६८ ॥ त
स्मिन्समर्पितंकर्मकर्मनाशायकल्पते ॥ यथाकुठारसंबद्धंकाष्ठंकाष्ठक्षयैर्भवेत् ॥ ६९ ॥ यथैवक्वथितं
बीजंनप्ररोहितुमर्हति ॥ तथाविष्ण्वर्पितंकर्मकर्मवृद्ध्येनकल्पते ॥ ७० ॥ अन्यथाकर्मणांपारोनेत्रगंतुं
हिशक्यते । एकस्मिन्भुज्यमानेतुकर्मणिस्यान्नरस्यतु ॥ ७१ ॥ कर्मणांराशिरित्येवंभुज्यमानेपुनःपु
नः ॥ जायंतेराशयोपारानार्हत्येवहितेक्षयं ॥ ७२ ॥ अतोज्ञानंसमीहेततत्साधनमहंब्रुवे ॥ श्रवणंम
ननंध्यानंकुर्वीतास्यैवसर्वदा ॥ ७३ ॥ संकोच्यापिहिकर्माणिनित्यंश्रवणमाचरेत् ॥ श्रुतमर्थंभावयेत
मननंतत्प्रकीर्तितं ॥ ७४ ॥ अनुस्यूताभवेद्यातुतैलधारेवसंस्मृतिः ॥ सैवध्यानमितिप्रोक्तंश्रुतस्यार्थस्य
यद्भवेत् ॥ ७५ ॥ ततोहरिप्रसादेनजायतेज्ञानभास्करः ॥ तेनसंचितनाशःस्यान्नलेपःक्रियमाणतः
॥ ७६ ॥ प्रारब्धेभोगतःक्षीणेजायतेलिंगभेदनं ॥ श्रोत्रंत्वक्चक्षुषीजिव्हानासिकापंचमीतिच ॥
॥ ७७ ॥ ज्ञानेंद्रियाणिपंचैवपंचकर्मेंद्रियाणिच ॥ हस्तौपादौचवाक्पायुरुपस्थंपंचमंतथा ॥ ७८ ॥
एकादशंमनोराजाततोमात्रास्तुपंचच ॥ शब्दःस्पर्शश्चरूपंचरसोगंधइतिक्रमात् ॥ १७९॥ आकाशंवा

युवह्लयंत्रुभूमीनांसूक्ष्मकारणम् ॥ ज्ञानेंद्रियाणांपंचानांपंचामीविषया क्रमात् ॥ १८०॥ एवंषोडशमात्रा भिरनादिर्लिंगदेहकः ॥ जीवस्वरूपमावृत्यकंचुकीवत्तुतिष्ठति ॥ ८१ ॥ ज्ञानानंदादिकंजीवेसर्वंतेनापि धीयते ॥ अतोयावत्तस्यसत्वंतावन्नानंददर्शनं ॥ ८२ ॥ ततस्तच्छेदनेयत्नंहरिभक्त्यासमीहते ॥ ना न्यःपंथाविद्यतेत्रततएतत्समाचरेत् ॥ ८३ ॥ एकएवस्वतंत्रोसावन्यत्स्यात्परतंत्रकम् ॥ यदादिशत्यसौ देवस्तथैवाचरतेखिलम् ॥ ८४ ॥ नसिप्रोतायथागावोदेवब्रह्मादयोखिलाः ॥ तदाज्ञामनुवर्ततेइति मत्वाविमुच्यते ॥ ८५ ॥ इतिभावनयाकार्यंसर्वदातस्यसेवनं ॥ तेनैवमुक्तिमाप्नोतिदुस्तराद्भवसागरा त् ॥ ८६ ॥ संसारेस्मिन्दुःखरूपेह्यंतेसुखविप्रुषः ॥ नसज्जेत्तत्रवैविद्वान्नोद्विग्नोदुःखतोभवेत् ॥ ॥ ८७ ॥ अस्थिरंद्वयमेतद्धिविद्वांस्तत्रनमुह्यति ॥ नहृष्येतसुखप्राप्तौदुःखप्राप्तौनचोद्विजेत् ॥ ८८ ॥ अतश्चित्तंसमाधायमावसीदयुधिष्ठिर ॥ एवंशृणुताविप्रेंद्रामाहिमानंमहाद्भुतं ॥ ८९ विष्णोरनंतवीर्यस्यव र्णितंपूर्वसूरिभिः ॥ सोयंसर्वसुराधीशोविष्णुःसर्वेष्टदायकः ॥ ९० ॥ चातुर्मास्येकृतैःपुण्यैर्विशेषात्प्री तिमश्नुते ॥ अतःसर्वप्रयत्नेनचातुर्मास्यंमुमुक्षुभिः ॥ ९१ ॥ कर्तव्यंयच्चपूर्वोक्तंनकर्तव्यंयथोदितं ॥ य थाकालंयथाशक्तिविदध्यात्तद्धितंभवेत् ॥ ९२ ॥ इदंगुह्यतमंलोकेसर्ववेदशिरःसमम् ॥ पठेद्वाशृणुया द्वायःसर्भक्तिलभतेहरेः ॥ ९ ॥ सर्वसिद्धिंलभेतासौसर्वपुण्यंकृतंभवेत् ॥ इतिमाहात्म्यमाश्रुत्यचा तुर्मास्यस्यसाधरा ॥ ९४ ॥ क्रोडरूपधराद्विष्णोःप्रणम्याब्रूतसापुनः ॥ धन्यास्म्यनुगृहीतास्मिश्रुतवत्य

रिमतेमुखात् ॥ १५ ॥ चातुर्मास्यस्यमाहात्म्यंइदंगुह्यतमंविभो ॥ इदानींश्रोतुमिच्छामियथानृत्राह तःपुरा ॥ १६ ॥ कृपयातन्ममाचक्ष्वविस्तरान्मधुसूदन ॥ नाहंतृप्यामिदेवेशशृण्वतीत्वन्मुखांबुजा त् ॥ १७ ॥ कथाविचित्रागुह्याश्रयाश्चकैरपिनश्रुताः ॥ १८ ॥ ॥ इतिश्रीवाराहपुराणेचातुर्मा स्यमाहात्म्येधरणीवराहसंवादेसप्तविंशोऽध्यायः ॥ २७ ॥ ॥ श्रीकृष्णार्पणमस्तु ॥ ॥ छ ॥

चातुर्मास्यमाहात्म्यं समाप्तम् ॥

